प्रज्ञा-मूल-मही विवेक-सलिलैः सिक्ता, बलोपघ्निका*
मन्त्रैः† पल्लविता, विशाल-विटपा सन्ध्यादिभिः षड्गुणैः।
शक्त्या कोरकिता, यशः-सुरभिता, सिद्ध्या समुद्यत्फला
संप्राप्ता भुवि भाति नीति-लतिका सर्व्वोत्तरं माधवम् ॥५॥

‡श्रीमती जननी यस्य सुकीर्त्तिर्मायणः पिता।
सायणो भोगनाथश्च मनोबुद्धी§ सहोदरौ ॥६॥

यस्य बौधायनं|| सूत्रं शाखा यस्य च याजुषी।
भारद्वाजं कुलं यस्य सर्व्वज्ञः स हि माधवः ॥७॥

स माधवः सकल-पुराण-संहिता-
प्रवर्त्तकः स्मृति-सुषमा¶ पराशरः।
पराशर-स्मृति-जगदीहितात्मने
पराशर-स्मृति-विवृतौ प्रवर्त्तते ॥८॥

पराशर-स्मृतिः पूर्व्वैर्न व्याख्याता निबन्धृभिः।
मयाऽतो माधवार्य्येण तद्व्याख्यायां प्रयत्यते** ॥९॥

---

* बलोपबृंहिता,—इति सो॰ हि॰ पुस्तके पाठः। बलोपघ्निका,—इति मु॰ पुस्तके पाठः।

† अस्त्रैः,—इति सो॰ पुस्तकयोः स॰ पुस्तके च पाठः।

‡ श्रीमती यस्य जननी—इति मु॰ पुस्तके पाठः। अयं श्लोक, इतः श्लोकात् पूर्व्वं 'यस्य बौधायनं'—इत्यादि श्लोकोत् वर्त्तते।

§ मनोबुद्धिः,—इति मु॰ पुस्तके पाठः।

|| बोधायनं,—इति मु॰ पुस्तके पाठः।

¶ सुषमा,—इति सो॰ पुस्तकयोः, स॰ पुस्तके च पाठः।

** तद्व्याख्यैवं प्रवर्त्तते,—इति मु॰ पुस्तके पाठः।

ननु, नेयं स्मृतिर्व्याख्यानमर्हति, तत्-प्रामाण्यस्य(१) दुर्निरूपत्वात्। तथा हि,—वेद-प्रामाण्य-कारणं जैमिनिना सूचितम्,—"तत् प्रमाणं बादरायणस्यानपेक्षत्वात्" (मी० १,१,५सू०)—इति। न तत् पौरुषेयेषु(२) मूलप्रमाण-सापेक्षेषु ग्रन्थेषु* योजयितुं शक्यते(३)। तेषान्तु मूल-प्रमाणमुपजीव्य प्रामाण्यम्। तत्र, मूलस्य दुर्लभत्वात्†। न तावत् प्रत्यक्षं मूलम्। ‡धर्मस्यातीन्द्रियत्वात्(४)। नाप्यनुमानम्,(५) तस्य प्रत्यक्षसापेक्षत्वात्(६)। नापि पुरुषान्तर-वाक्यम्। (७)विप्रलम्भकस्य पुंसो §यथा-दृष्टार्थ-वादित्वाभावात्।

---

* ग्रन्थेषु,—इति सो० प्र० पुस्तके नास्ति।

† दुर्भणत्वात्,—इति मु० पुस्तकपाठः।

‡ तस्यातीन्द्रियत्वात्,—इति मु० पुस्तकपाठः।

§ यथार्थदृष्टार्थ,—इति सो० स० पुस्तकपाठः।

---

(१) तदिति स्मृतेः परामर्शः।

(२) पौरुषेयत्वं मूलप्रमाणसापेक्षत्वे हेतुगर्भविशेषणम्। पुंवचसां मूल-प्रमाणसापेक्षाणामेव प्रामाण्याभ्युपगमादिति भावः।

(३) जैमिन्युक्तस्य प्रामाण्यहेतोरनपेक्षत्वस्य तत्राभावादित्यभिप्रायः।

(४) सुखादिवदात्मगुणत्वाविशेषेऽपि अयोग्यत्वादतीन्द्रियत्वं धर्मस्य। धर्मे प्रत्यक्षं न मूलमित्येतच्च,—"सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धि-जन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्"(१,१,४)—इति मीमांसासूत्रादौ व्यक्तम्।

(५) अत्र 'मूलम्'—इत्यनुषञ्जनीयम्। एवं परत्र।

(६) अनुमितेस्तु व्याप्त्यादिप्रत्यक्षसापेक्षत्वादित्यर्थः। तथा,"अथ तत्पूर्वक-मनुमानम्"—(१,१,५)—इति न्यायसूत्रादौ व्यक्तं चेदम्।

(७) पुरुषान्तराणां हि विप्रलम्भकाविप्रलम्भकभेदेन द्वैविध्यं। द्विविधा-नामपि तेषां वाक्यं न मूलमिति क्रमेण प्रतिपादयति विप्रलम्भकस्येति। प्रतारकस्येत्यर्थः।

"वैदिकैः कर्म्मसाम्यत्वात् परिग्रह-समत्वतः* ।
सम्भाव्य-वेद-मूलत्वात् स्मृतीनां मानतोचिता"(१) ।

इति । मनुनाऽप्येतदेवोक्तम्,—

"श्रुतिं पश्यन्ति मुनयः स्मरन्ति च तथा स्मृतिम् ।
तस्मात् प्रमाणमुभयं प्रमाणैः प्रथितं† भुवि ।
योऽवमन्येत ते तूभे‡ हेतु-शास्त्राश्रयात्(२) द्विजः§ ।
स साधुभिर्बहिःकार्यो नास्तिको वेदनिन्दकः" ।

इति । भानुशासनेऽपि,—

"धर्म्मं जिज्ञासमानानां प्रमाणं परमं|| श्रुतिः ।

---

* तत्परिग्रहदार्ढ्यात्,— इति मु० पुस्तकपाठः ।
† प्रमितं—इति मु० पुस्तकपाठः ।
‡ ते मूले,—इति मु० म० पाठः ।
§ नरः,—इति मु० पुस्तकपाठः ।
|| प्रथमं—इति मु० पुस्तकपाठः ।

---

तेषां स्मार्त्तत्वस्य शौचादीनामपि । तदेतत् मीमांसाप्रथम-तृतीय-प्रथमाधिकरणे स्पष्टं । परन्तु विस्तरत्वात् वेदानां शाखोच्छेदाद्वा ता चैषणा भाष्यादिभिरवगम्यते । इतरदपि तत्र, न्याय कुसुमाञ्जलौ प्रत्यक्षविप्रसक्तिषु च यथायथं सुव्यक्तम् ।

(१) वैदिकैः कर्म्मसाम्यत्वात्,— इति सम्भाव्यवेदमूलतायां हेतुः । तथाच जैमिनिसूत्रम् । "अपि वा कर्त्तृसामान्यात् प्रमाणमनुमानं स्यात्" (मी०१,३,२) इति । परिग्रहः शिष्टपरिग्रहः । स च वैदिके स्मार्त्ते च पदार्थे समानः । अयमपि सम्भाव्यवेदमूलतायां हेतुः । स्मृतयः प्रमाणं शिष्टपरिगृहीतत्वाद्वेदवदित्यनुमानस्य सम्भवात् । सम्भाव्यवेद-मूलत्वात् अनुमीयमानवेदमूलत्वात् ।

(२) हेतुशास्त्रं कुतर्कोपदेशकचार्वाकदर्शनादि ।

द्वितीयं धर्म्मशास्त्रन्तु तृतीयं लोक-संग्रहः"[१]।

इति। तस्मात् व्याख्यातुं योग्या पराशर-स्मृतिरिति स्थितम्।

[२]पराशर-स्मृतावस्यां पद्य-व्याप्तिर्विविच्यते।

द्वे काण्डे, द्वादशाध्यायाः, श्लोकाः षष्ठोनषट्शतम्।

आचारस्यादिमः काण्डः प्रायश्चित्तस्य चान्तिमः।

इष्ट-प्राप्तिरनिष्टस्य निवृत्तिश्चानयोः क्रमात्[३]।

एते सर्व्वे पुण्य-लोका भवन्तीति श्रुतिर्जगौ;—

विच्छिन्नादाश्रमाचारादिष्टाप्तिं पारलौकिकीम्*।

प्रत्यक्षो नरकोऽनिष्टो निषिद्धाचरणेन यः[४]।

तन्निवृत्तिः स्फुटा† शास्त्रे प्रायश्चित्ताभिधायिनी।

पर-लोक-प्रधानस्य[५] धर्म्मस्यैषा द्वयी गतिः,—

---

* दिष्टाप्तिः पारलौकिकी,—इति मु॰ पुस्तकपाठः।

† स्फुटं—इति मु॰ पुस्तकपाठः।

---

(१) धर्म्मशास्त्रं धर्म्मोपदेशप्रधानमन्वादिसंहिता। तत्र हि धर्म्मोपदेश एव प्रधानं, क्वचित्कमितिहासाख्यानस्यानुषङ्गिकं। पुराणे तु तद्विपरीतं। अतो न तत् धर्म्मशास्त्रं। स्पष्टञ्चैतत् आह्निकविवेकटीकादौ। तृतीयस्मात् पुराणसंग्रहः। लोकसंग्रहो लोकव्यवहारः। दौर्ब्बल्यममीषां यथोत्तरं पूर्व्वमित्यस्य विस्तरः।

(२) पराशरस्मृतेर्व्याख्येयत्वं प्रतिपाद्य तस्याः काण्डविभागादिकं वक्तुमुपक्रमते पराशरेति।

(३) काण्डद्वयस्यैतद्द्वयं क्रमात् प्रयोजनमित्यर्थः।

(४) निषिद्धाचरणेन योऽनिष्टः प्रत्यक्ष इत्यन्वयः। नरकस्य विशेषणं 'अनिष्टः'—इति।

(५) व्यवहारस्तु न परलोकप्रधान इत्यनुपदमेव व्यक्तीभविष्यति।

इहलोक-प्रधानोऽयं पर-लोकोपसर्ज्जनः।
स धर्म्मो व्यवहारः स्यादाचारस्तु विपर्य्ययात्*(१)।
प्राधान्येऽप्यस्य लोकस्य व्यवहारस्य मूलता।
गान्धर्व्वाद्युपवेदेषु तादृशेषु तदीक्षणात्(२)।
(३)"जग्राह पाठ्यमृग्वेदात्† सामभ्यो गीतमेव च।
यजुर्वेदादभिनयान् रसानाथर्व्वणादपि‡"।
किं बहुनाऽयमाचार्य्यः पर-लोकैक-दृष्टिमान्।
व्यवहारन्तु नावोचत् किन्तु दर्शितवानमुम्(४)।
राज-धर्म्म-प्रसङ्गेन,(५) 'क्षितिं धर्म्मेण पालयेत्'।
इति ब्रुवन् राज-वृत्तं व्यवहारमसूचयत्।
(६)आचारादिह्यास्ति-हेतुराचारः पूर्व्वमीर्य्यते§।

---

* विपर्य्यये,—इति मु० पुस्तकपाठः।
† पाठ्यमग्वेदात्,—मु० पुस्तकपाठः।
‡ सामान्याथर्व्वणादपि,—इति मु० पुस्तकपाठः।
§ पूर्व्वमिष्यते,—इति मु० पुस्तकपाठः।

---

(१) इतरलोकोपसर्ज्जनः परलोकप्रधानो धर्म्म आचार इत्यर्थः।
(२) तादृशेषु इहलोकप्रधानेषु। तदीक्षणात् व्यवहारमूलत्वदर्शनात्।
(३) गान्धर्व्वोपवेदस्य व्यवहारमूलत्वे तमधिकृत्य पठितं वाक्यमुदाहरति जग्राहेति। अभिनयान् "भवेदभिनयोऽवस्थानुकारः"—इत्युक्तलक्षणावस्थानुकारान्। रसान् शृङ्गारादीन्। व्यवहारत्वमेव तत्र विशेषो गान्धर्व्वस्य।
(४) उपसंहरति किं बहुनेति। अमुं व्यवहारं।
(५) राजधर्म्मप्रसङ्गेन,—इतिच्छेदः। एतच्च 'दर्शितवान्' इति पूर्व्वेणान्वितं। सूचनप्रकारमेवाह क्षितिमित्यादिना।
(६) इदानीमाचारव्यवहार-प्रायश्चित्तकाण्डयोः पौर्व्वापर्य्यमुपपादयितुमाह आचारादिति।

नोक्तं, तथा रहस्यञ्च प्रायश्चित्तञ्च वर्णितम् ।
नापि पर्षदि शास्त्राणि* नोदितान्यत्र कानिचित् ।
नोक्तः कर्मविपाकश्च तत् सर्वमुपलक्षितम् ।
इत्थं नवभिरध्यायैः प्रायश्चित्तं प्रपञ्चितम् ।
कलिं प्रति प्रधानत्वात् प्रायश्चित्तं प्रपञ्चितम् ।
कलौ हि पापबाहुल्यं दृश्यते श्रूयतेऽपि च ।
नराः प्रायोऽल्पसामर्थ्यास्तेषामनुजिघृक्षया ।
अल्पेनाप्यदाचारं प्रायश्चित्तं ब्रवीति च† ।
"तेषां निन्दा न कर्त्तव्या युगरूपाहि ते द्विजाः" ।
इत्युक्तमादावन्ते च, मधुकैः‡ कृपालुना ।
वेदैकदेशाध्ययनं कृष्या विप्रादि-जीवनम् ।
इत्यादिवृषलाऽऽचारे बहुदोषोऽभाषते स्फुटम् ।
प्राजापत्यं गो-वधे स्यात्, ब्रह्म-घ्ने सेतु-दर्शनम् ।
इति स्वल्पतरोक्तेः बहुदोषोऽप्यपि लभ्यते ।
सम्प्रदायानुसारेण विषयस्य व्यवस्थितिः ।
कल्पनीयेति चेद् भूरि सार्वदेश्यं मन्यसे कथम्§(१) ।

---

* प्रायश्चित्ताभिधायकं शास्त्रान्तरं स्मृतिव्यतिरिक्तं पुस्तकेषु नास्ति ।
† प्रायश्चित्तान्तराणि च,—इति मु॰ पुस्तकपाठः ।
‡ प्रायुक्तैवा,—इति मु॰ पुस्तकेपाठः ।
§ सार्वदेशिकम्,—इति मु॰ पुस्तकेपाठः ।

---

(१) गोवधे प्राजापत्यं ब्रह्मवधे सेतुदर्शनञ्च न युक्तमतं येन सङ्कोचःस्यात्, किन्तु "यथा वयो यथा कालं यथा प्राणश्च ब्राह्मणे । प्रायश्चित्तं

न संशये—वारयेत्तु पण्डितम्मन्यता तव(१)।
अस्तु निर्णयमत्र तं ब्रूमः प्रामाण्य-वादिनः।
प्रतीतेऽर्थेऽखिलं शास्त्रं प्रमाणं बाधया विना(२)।
न पराशर-वाक्यस्य बाधः स्मृत्यन्तरे क्वचित्।
मतान्तरोपदेशस्य न बाधोऽव्यभिचारणात्(३)।
प्रियङ्गु-कोद्रव-व्रीहि-गोधूमादीन्यनेकशः।
साधनानि यथैकस्यास्तृप्तेर्दृष्टान्यबाधया।
(४)यथा च स्वर्गे एकस्मिन् विश्वजिच्चाग्निहोत्रकम्।
अग्निष्टोमस्तु दर्शाद्या हेतवोऽबाधकाः श्रुताः*।
यथा वा ब्रह्मलोकस्य लोकस्य प्राप्ति-हेतवः।
उपास्तयो विकल्प्यन्ते शाण्डिल्य-दहरादयः(५)।

---

* स्मृताः,—इति ख॰ घे॰ पुस्तकयोः पाठः।

---

(१) पूर्व्वपक्षी शङ्कते नन्विति। [illegible] विषयव्यवस्थाया अभावे परस्परविरोधेन सर्व्वासामेव शास्त्राणामप्रामाण्यापत्तेरिति भावः। सिद्धान्ती समाधत्ते न संशये इति।

(२) प्रामाण्यस्य स्वतस्त्वात् असति बाधके प्रतीतेऽर्थे प्रामाण्यं निराबाधं शास्त्रान्तरापेक्षाविरहादित्यर्थः।

(३) स्मृत्यन्तरेषु मतान्तरोपदेशात्र पराशरोक्तमतस्य बाधः, मतान्तरोपदेशस्य मतान्तरबाधकत्वासम्भवात्। स्मृत्यन्तरेष्वपि पराशरोक्तमतादे-निवारणाभावाच्च।

(४) प्रियङ्ग्वादीनां तृप्तिविशेषेषु हेतुत्वात् कथं तत्र विकल्प इत्याशङ्क्याह यथा चेति।

(५) दृष्टान्तान्तरमाह यथा वेति। शाण्डिल्योपास्तिः, "सर्व्वं खल्विदं ब्रह्म"—इत्युपक्रम्य, "स क्रतुं कुर्व्वीत मनोमयः प्राणशरीरो भारूपः"—

तथैवैकस्य पापस्य निष्कृतीर्बहवः स्मृताः ।
मतभेदा विकल्प्यन्तां मन्वाद्यास्तु ते यथा*(१) ।
ननु क्व षड्गव्यादिः क्व च वा मरणान्तिकम् ! ।
तयोः सम-विकल्पत्वं वदतस्तेऽपि साहसम् ! (२) ।
न विश्वजित् चाग्निहोत्रं स्वर्गं साधयतोस्तयोः—
विकल्पं वदतस्ते वा स्फुटमेवाति साहसम् (३) ।
कर्माधिक्यात् फलाधिक्यमिति न्याय-समाश्रयात् ।
साहसं परिहर्त्तव्यमित्येतदुभयोः समम्(४) ।

---

* मतभेदा विकल्प्यन्तां मन्वाद्याः सन्तु ते यथा,—इति से० स० पुस्तकयोः पाठः ।

---

इत्यादिना छान्दोग्यादौ विहिता। इयमेव शाण्डिल्यविद्येत्याख्यायते। दहरोपास्तिस्तु,—"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म"—इत्यादिना छान्दोग्यएवाभिहिता दहरविद्या चाख्यायते। आदिशब्दात् वैश्वानरविद्यादयः ।

(१) तथा च गोवधादौ पराशरोक्तं प्राजापत्यादिकं स्मृत्यन्तरोक्तं प्रायश्चित्तान्तरञ्च द्वयमपि मुख्यमेव इत्यनयोर्विकल्पएवेत्ययं सिद्धान्त-निष्कर्षः ।

(२) पूर्वपक्षी शङ्कते नन्विति । अयमर्थः । कश्चिदेकेन मुनिना षड्गवादि लघुप्रायश्चित्तमुक्तं, तत्रैव पापे अपरेण मुनिना प्राणान्तिकमुक्तं । तदनयोर्गुरुलघुप्रायश्चित्तयोः समविकल्पत्वमसमञ्जसमयुक्तिकमितिभावः ।

(३) सिद्धान्तीसमाधत्ते नविश्वजिदिति । तथाच विश्वजिदग्निहोत्रयोरपि लघुगुरुकर्मणोः स्वर्गसाधनयोर्विकल्पो न स्यात् । स चोभयापीष्यते इति भावः ।

(४) पूर्वपक्षी विश्वजिदादौ विकल्पमुपपादयितुमाह कर्माधिक्यादिति । अयमभिसन्धिः । लघुगुरुप्रयत्नसाध्यानां विकल्पत्वे मुख्यापायस्थानानु-

युगाद्यैर्मन्वमतयो युगपत्त्वे हि वेदकम्(१) ।
अन्यथाऽल्पस्य पापस्य कृते द्वादश-वार्षिके ।
महापापनिवृत्त्यर्थ-मोक्ता व्यवस्था तादृशी यतः(२) ।
यथाऽयं मनुना गम्यो नान्येनाप्युत, तदा वद ।
इदमस्य मतस्येदमिति मे किं नियामकम् ।
अनाचार-सदाचारौ यद्यन्यस्य-मतस्थयोः—
*हेतुसंदामतास्तर्हि भवेयुः सप्तकादयः ! (३) ।
सिंह-व्याघ्रादि-मूषादौ प्रयास-मज्जनतः† ।
पशु-गव्यात् प्रशस्तत्वं मताज्ञानस्य ते भवेत् ! ।
इति कर्त्तव्य-बाहुल्यं मयस्तोत्, तदाऽन्यता ।
‡अग्न्यादि-प्रवेशस्य प्रकल्पेन मतान्तरात्(४) ।

---

* हेतू महामता,—इति मु० पुस्तके पाठः ।
† प्रयासो मज्जनः मुक्त,—इति मु० पुस्तके पाठः ।
‡ शम्यादि,—इति मु० पुस्तके पाठः ।

---

(१) ननु यदि कल्पान्तरानुसारेण युगान्तरवचनानां विषयव्यवस्था न प्रामाणिकी, तर्हि कथं सर्व्वैरेव प्राचीननिबन्धृभिस्तथाविधा व्यवस्था कृतेत्याशङ्क्य तेषामाशयं प्रकाशयति स्मरतीति। तथा चापाततो विरुद्ध-वचनदर्शनात् मन्दबुद्धयो मा मुह्येरन् इति तत्प्रबोधाय तैस्तादृशी व्यवस्था कृता, येन केनचिदुक्तितेनैव वचनविषयनियमनेन वस्तुतस्तेषु-भावादिति भावः ।
(२) द्वादश वार्षिके कृते अल्पस्य पापस्य निष्कृतिर्न स्यात् । महापापस्यैव तद्धेतुताया अवस्थितत्वादित्यर्थः ।
(३) तेषामाचाराधिक्यादिति भावः ।
(४) अग्न्यादिप्रवेशस्य मतान्तरादन्यता प्रसज्यते मतान्तरापेक्षया तत्रेति-कर्त्तव्यताया आधिक्यादिति भावः ।

तथा महाव्रतस्यापि भागेनाल्प-विनाशने ।
व्रत-शेष-विपाकेन लभ्यते सकलं सुखम् ।
(१)अतोऽल्पं वा महद्वापि व्रतं पाप-निवर्त्तकम्* ।
अन्तूनां पण्डितानां च† वाक्यमेवं समञ्जसम् ।
(२)न महाव्रत-वैयर्थ्यं पापस्याल्पेन नाशने ।
अल्प-नाशोऽर्द्धभाविन्यां सुधायां‡ योपयोगतः ।
एवञ्चैकस्य पापस्य व्रतेषूक्तेष्वयं पुमान् ।
प्रवर्त्ततेऽतिविस्रब्धं§ यस्मिन् कस्मिंश्चिदिच्छया(३) ।
अन्यथा नास्य विस्रम्भो ||विषयस्य व्यवस्थितिम्—
अजानतो जानतोऽपि वचनान्तर-शङ्कया ।
अस्मान्वितेषु सर्व्वेषु¶ व्रतेषु(४) महति व्रते ।

---

* अतोऽल्पतममहद्वापि व्रतं पापातिसर्व्वकम्,— इति स० से० पुस्तकयोः पाठः ।

† अन्तूनामखिलानाञ्च,— इति मु० पुस्तके पाठः ।

‡ पापनाशोऽर्द्धभाविन्यां सुखादौ,— इति स० से० पुस्तकयोः पाठः ।

§ प्रवर्त्तेत विस्रम्भात्,— इति स० से० पुस्तकयोः पाठः ।

|| विषयस्याव्यवस्थितेः, इति स० से० पुस्तकयोः पाठः ।

¶ ग्रन्थेषु, इति मु० पुस्तके पाठः ।

---

(१) अल्पं महद्वा भवतु सर्व्वमेव व्रतं सकलपापनाशकं इत्येतत् अन्तू-मान्दवीयं वाक्यं । तथाचाह "कृच्छ्रचान्द्रायणादीनि शुद्ध्यर्थमुपचारकं" इत्याद्यभिधाय, "एते व्रताः समस्ता वा प्रत्येकमेकशोऽपि वा । पातकादिषु सर्व्वेषु पापघ्नाः प्रयत्नतः"—इत्यादि निन्दाभिधादि प्रवचनान्यनुसन्धेयानि ।

(२) अल्पभवेन महापापनाशे महाव्रतं व्यर्थं स्यादित्याशङ्कानिराकरोति नेति ।

(३) इच्छया सर्व्वव्रतानां सर्व्वपापनाशकत्वे च । प्रवर्त्तयतीति पाठे स्वार्थे णिच् ।

(४) निर्धारणे सप्तमी ।

प्रवर्त्तमानः पुरुषः श्रेयः प्राप्नोत्यसंशयम् ।
कलौ पराशरोक्तानां मतानामेव मुख्यता ।
तैरन्यैरपि* तत्प्रायं निःश्रेयं चि-निवर्त्तते ।
एतदेव विवक्षित्वा प्रतिपक्षे[१]विशेषतः ।
पराशरेण यत् प्रोक्तं प्रायश्चित्तमितीदृशम् ।
युगान्तर-प्रणीतानां स्मृतीनां महतामपि ।
मतानामुपयोगः स्यात् कलौ, [२]पूर्वोक्तनीतितः† ।
श्रुतिलिङ्गेन यत् प्रोक्तं तदन्येन निषेधति ।
प्रत्युतोदाहरेत् तस्मात् पूर्वोक्तं सर्व्वसम्मतम् ।
[३]इत्थं सति, मीमांसा निष्फला ते प्रसज्यते ।
शास्त्रान्तर-प्रणीतानां युक्तानामप्यसङ्गतेः ।
शृणु मीमांसकम्मन्य! श्रुति-वाक्येषु किं बलात् ।
स्वपादानितिविरोधस्तु पाण्डित्यं ख्यापितं तव ।‡ ।

---

* तैरन्यैरपि,—इति स० सो० पुस्तकयोः पाठः ।
† पूर्वोक्तरीतितः,—इति मु० पुस्तके पाठः ।
‡ उतपाद्यापि विरोधस्ते पाण्डित्यं ख्याप्यतां त्वया,—इति मु० पुस्तके पाठः ।

---

(१) प्रतिपक्षे प्रतिभासनात् ।
(२) पूर्वोक्तनीतितः पूर्वोक्तन्यायात् । महापातकानुष्ठाने ब्रह्मादिष्वेयःप्राप्ति-रिति पूर्वोक्तो न्यायः । समयभेदेनाभयानुष्ठाने ब्रह्मण्यो भवत्या-दिति भावः । अथवा दशवर्षस्य मासस्रेन्नादिपूर्वोक्तन्यायोऽत्र द्रष्टव्यः ।
(३) पूर्वपक्षी प्राह इत्येति । इत्थं सति येन केनचित् प्रकारेण यस्य कस्य-चित् पापस्य क्षयेऽपि मीमांसा निष्फलेत्यत आह शृणुत्यादि । पूर्वोत्तर-मीमांसयोर्मुख्योपसंहारस्य सिद्धान्तितत्वात् सम्भव तदपवादाभावात् मीमांसा व्यर्थेत्यभिप्रायः ।

(१)व्रतान्तरोक्तिमात्रेण* न विरोधः प्रसज्यते ।
समुच्चये विकल्पे वा का हानिस्तत्र ते भवेत् ।
स्नानं दानं जपो होम इति नैमित्तिका यथा ।
उपरागे समुच्चित्य तथा व्रत-समुच्चयः†(२) ।
(३)एकेन नाशिते पापे द्वितीयं चेत् निरर्थकम् ।
न, तयोरुभयत्वस्य‡ स्वर्ग-हेतुत्व-सम्भवात् ।
(४)चान्द्रायणादावस्त्येवं§ तपस्त्वेन तदीरणात् ।
भिक्षा-ब्रह्मकपालादौ स्यात् कथं नष्टपाप्मनः ।
(५)एवं तर्हीदृशे स्थाने विकल्पोऽस्तु निजेच्छया ।

---

* व्रतान्तरोक्ति मात्रेऽपि,—इति स० सो० पुस्तकयोः पाठः ।
† स्नानमित्यारभ्य समुच्चय इत्यन्तं स० सो० पुस्तकयोर्नास्ति ।
‡ न तयोरुभयोस्तस्य,—इति स० सो० पुस्तकयोः पाठः ।
§ स्मृतिष्वेव तदीरणात्,—इति स० सो० पुस्तकयोः पाठः ।

---

(१) मुख्यव्रतवाक्ये व्रतान्तराभिधानादेव विरोध इत्याशङ्क्याह, व्रतेति ।
(२) समुच्चये दृष्टान्तमाह स्नानेत्यादिना । उपरागो ग्रहणम् ।
(३) पूर्व्वपक्षी समुच्चयपक्षमाक्षिपति एकेनेति । व्रतेनेति शेषः । सिद्धान्ती समाधत्ते नेति । तस्य व्रतस्य ; स्पष्टमन्यत् । न तयोरुभयोस्तस्येति पाठे, उभयोर्व्रतयोर्मध्ये तस्य द्वितीयव्रतस्य स्वर्गहेतुत्वसम्भवात् न निरर्थकत्वं तस्येत्यर्थः ।
(४) पूर्व्वपक्षी शङ्कते चान्द्रायणादाविति । चान्द्रायणादौ तपस्त्वस्य स्मरणात् चन्द्रलोकावाप्त्यादि फलश्रवणात् च तावत्तत्रापि द्वितीयस्य स्वर्गहेतुत्वमस्तु, भिक्षादौ तपस्त्वानभिधानात् फलविशेषाश्रवणात् च कथं तस्य स्वर्गहेतुत्वमवगमनमिति पूर्व्वपक्षार्थः ।
(५) सिद्धान्ती समाधत्ते एवं तर्हीति । तथाच यत्र स्वर्गादिहेतुत्वं शास्त्रादवगम्यते, तत्र नानाव्रतानां समुच्चयः एकेन पापनाशेऽप्यपरेषां स्वर्गहेतुत्वसम्भवात् । यत्र तु स्वर्गसाधनत्वं शास्त्रान्नावगम्यते तत्र

प्रवक्ष्यामि, यथा पूर्वं निबन्धन-समाख्यया* ।
(१)यत् यस्मिन् विषये प्रोक्तं तत्र तत्र प्रसक्तता—
विवक्षिता, नेतरस्य निषेधोऽत्र विवक्ष्यते ।
(२)तद्विवेकाय कुर्वेऽहं व्याख्यां पाराशर-स्मृतेः ।
(टीकाकारोपक्रमणिका समाप्ता)

---

(३)प्रारिप्सित-प्रतिपत्तये श्रोतृबुद्धि-समाधानाय†(४) संबन्धाधिकारि-विषय-प्रयोजनरूपमनुबन्ध-चतुष्टयमादौ श्लोक-द्वयेनोपनिबध्नाति,—

‡अथातो हिम-शैलाग्रे देवदारु-वनालये ।
व्यासमेकाग्रमासीनमपृच्छन्नृषयः पुरा ॥ १ ॥
मानुषाणां हितं धर्मं वर्त्तमाने कलौ युगे ।
शौचाचारं यथावच्च वद सत्यवती-सुत ! ॥ २ ॥

---

* निबन्धनकृत यथा,— इति मु० पुस्तके पाठः ।
† प्रारिप्सितग्रन्थे श्रोतृ बुद्धिमनः समाधानाय,—इति मु० पुस्तके पाठः ।
‡ सदाशिव-सुतं वन्दे विदारित-विपद्भयम् ।
सुरैः … … वारणाननम् ।
इत्ययं श्लोकः अथात इत्यादिश्लोकात् पूर्वं सो० मू० पुस्तके वर्त्तते ।

---

(१) यस्मिन्यस्मिन्नर्थे वदति यदिति ।
(२) तद्विवेकाय कुर्वे, यस्य प्रसक्तत्वमितरेतरविवेकाय ।
(३) उपोद्घातार्थं विचारं समाप्य इदं व्याख्यातुं भूमिकामारचयति प्रारिप्सितेति ।
(४) अनुबध्यते इति अनुबन्धाः अनुबन्धपदं सम्बन्धादिचतुष्टयपरं । प्रयोजनमन्तरेण न केऽपि प्रवर्त्तन्ते, यत्र विषयोऽपि प्रवृत्तौ प्रयोजकः । अधिकारिणः सम्बन्धः । इत्यमधिकार्यभावे कस्य प्रवृत्तिः स्यात् । चतुष्टयकथनं शास्त्रादौ कर्त्तव्यं । इत्थं मीमांसा-प्रथम-प्रथम-प्रथमसूत्र-वार्त्तिके स्पष्टं ।

अन्यच्च पौरुषेयग्रन्थानाञ्च सर्व्व-वर्ण-विषयत्वात्(१) तएव तेषु योग्याः ।

अतः शब्दो हेत्वर्थः । यस्मादेक-शाखाध्ययनेनाशेष-धर्म्म-ज्ञानं, यस्माच्च युगान्तर-धर्म्मावगत्या न कलि-धर्म्मावगतिः, तस्मात्,— इति हेतुद्वयम् ।

यथैव-धर्म्म-मूलभूतानां विप्रकीर्णानन्त-वेद-वाक्यानां योगि-दृष्ट्यैव ग्राह्यत्वात् तस्याश्च दृष्टेर्योगावस्थायां*(२) सम्भवात् तदवस्था-योग्यं देश-विशेषं पद-द्वयेन निर्दिशति,—'हिम-शैलाग्रे देवदारु-वनालये'—इति । तत्र, 'हिम-शैलाग्रे'—इत्यनेन सर्व्व-प्राणि-दुर्ग-मत्वेन(३) विविक्ततामाह । तथाच, कैवल्योपनिषदि श्रूयते,—

"विविक्त-देशे च सुखासनस्थः"

इति । क्षुरिकायामपि श्रूयते,—

"निःशब्दं देशमास्थाय तत्रासनमुपाश्रितः"† ।

इति । 'देवदारु-वनालये'—इत्यनेन मनोऽनुकूलतामाह । अतएव श्वेताश्वतराणां मन्त्रोपनिषदि श्रुतम्,—

---

* युक्तावस्थायां,—इति मु० पुस्तके पाठः ।
† तत्रासनमपाश्रितः,—इति मु० पुस्तके पाठः ।

---

(१) पौरुषेयग्रन्थानां सर्व्ववर्णविषयत्वञ्च, "चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे । धर्म्मशास्त्राणि राजेन्द्र ! शृणु तानि नृपोत्तम !" इत्यादि भविष्यपुराणवचनादिष्वोक्तत्वाद् व्यक्तम् ।
(२) "योगश्चित्तवृत्तिनिरोधः" (१, २सू) इति योगसूत्रम् । व्याख्याऽस्य-टार्थः । तादृश्यावस्थायां ग्रन्थकृतैव सूचयिष्यते ।
(३) विविक्तत्वं विजनता ।

"समे शुचौ* शर्कर-वह्नि-वालुका—
विवर्जिते† वाऽथ जलाश्रयादिभिः(१)।
मनोऽनुकूले न च चक्षुःपीड़ने
गुहा-निवाताश्रयणे, प्रयोजयेत्"‡।

इति। चक्षुःपीड़नो मशकोपेतो देशः।

ननु "यत्रैकाग्रता तत्राविशेषात्"(२)(ब्र० ४,१,७सू०) इत्यस्मिन् अधिकरणे (ब्र० ४,१,६अ०) योगाभ्यासस्य दिग्देश-काल-नियमो नास्ति(३)। (४)बाढ़म्। अदृष्ट-हेतु-वैध-नियमाभावेऽपि§ दृष्ट-चित्तैकाग्र्यस्य हेतुर्नियमेन निवार्यते।

'एकाग्रम्'—इत्यनेन पञ्चविधासु चित्त-भूमिषु(५) अतीन्द्रिय-वस्तु-दर्शन-योग्या चतुर्थी भूमिर्निर्दिश्यते। तथाहि, पतञ्जलि-प्रणीतानां योग-सूत्राणां व्याख्याने ||वैयासिक-भाष्ये भूमि-पञ्चकं

---

* शर्करा, इति मु० पुस्तके पाठः।
† शब्दजलाश्रयादिभिः,—इति मु० पुस्तके पाठः।
‡ न योजयेत्—इति ख० वे० पुस्तकयोः पाठः।
§ अत्र, 'वध',—इति मु० पुस्तके नास्ति।
|| वैयासक,—इति मु० पुस्तके पाठः।

---

(१) शर्कराः क्षुद्रपाषाणाः। जलाश्रयवर्जनं शीतनिवृत्त्यर्थं।
(२) यत्रैव दिशि देशे काले वा मनस एकाग्रता भवति, तत्रैव उपासीत, इष्टाया एकाग्रतायाः सर्वत्राविशेषात् इति सूत्रार्थः।
(३) तथाच कथं 'समे शुचौ',—इत्यादिना योगोपयोगिदेशविशेषनिर्देश इति वाच्यमिति पूर्वपक्षार्थः।
(४) पूर्वपक्षमभ्युपगम्य परिहरति बाढ़मिति।
(५) चित्तस्य भूमयोऽवस्थाविशेषाः।

कथञ्चिदर्थवादस्य स्वार्थे प्रामाण्यं भविष्यति,—इति भ्रमेण अर्थवा-दैक-प्रसिद्धानाम् अमूर्त्तानां मन्त्रादीनां मीमांसा-भाष्य*-कृतो जैमिनेश्च सद्भावस्यैव† परित्यक्तव्यत्वात्। अर्थवेतिहासलोप-प्रसङ्गात्(१)। तस्मात् प्रमाणमेव भूतार्थवादः(२)। तथाच सति, "तं मनुराधत्त", "तं पूषाऽऽधत्त", "तं त्वष्टाऽऽधत्त" "तं धाताऽऽधत्त",—इत्यर्थवाद-बलादाधानमपि देवानां किं न स्यात्। आम्नायाभावे तु‡ कामं वसन्तादि-काल-विशेष-नियमो माभूत्; किमायातमाधानस्य?। किञ्च, मन्त्रेणापि आधानं लौकिकेऽग्नौ यागः क्वचिदुपलभ्यते। "अवकीर्णि-पशुश्च तद्वदाधानस्याप्राप्तकालत्वात्" (मी० अ० ६ पा० ८ सू०) इति जैमिनिसूत्रात्। "योऽब्रह्मचारी स्त्रियमुपेयात् स गर्दभं पशुमालभेत"—इत्यवकीर्णिपशुः। यथा उपन-यन-होमौ लौकिकाग्नौ, तथा असौ पशुः,—इति सूत्रार्थः। एतावता प्रयासेन देवानां कर्म्माधिकारे साधिते किं तव फलिष्यति? तथा मीमांसायां§ किं छिद्यते?। अभिनिवेशः केवलं छिद्यते,

---

* मीमांसा कृत (मीमांसाकृतस्य?) इति स० सो० पुस्तकयोः पाठः।
† सद्भावस्यैव,—इति स० सो० पुस्तकयोः पाठः।
‡ अत्र, 'आम्नायवलाद्यभावे तु'—इति पाठो भवितुं युक्तः।
§ तव वा मीमांसायां,—इति स० सो० पुस्तकयोः पाठः।

---

(१) देवतार्थवादैकगम्यत्वादितिभावः।
(२) विरुद्धानुवादभिन्नोऽर्थवादो भूतार्थवादः। तथा चोक्तम्। "विरोधे गुणवादः स्यादनुवादोऽवधारिते। भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः"—इति।

"य एवं विद्वान्, स संवत्सरमुपयन्ति"*—इति वृद्धिकामस्य यागं विधातुं प्रथमतः,—"गो-सवं वै संवत्सरः"—इति प्रशंसां कृत्वा, तां समापयितुं 'मातेव'—इत्यादि पठितम्। न चैतस्यार्थवादस्य, "यद्वै किञ्च मनुरवदत् तद्भेषजम्"—इत्यादिवत् स्वार्थेऽपि तात्पर्य्यं वर्णयितुं शक्यम्। प्रत्यक्षेण श्रुत्यन्तरेण च विरुद्धत्वात्(१)। तिरश्चां हि मन्त्रोच्चारणे कर्म्मानुष्ठाने च सामर्थ्याभावः प्रत्यक्ष-सिद्धः। श्रुत्यन्तरेण,—"अथेतरेषां पशूनां अशनाया-पिपासे एवाभिज्ञानं वदन्ति, न विज्ञातं पश्यन्ति†, न विदुः श्वस्तनम्"—इति पशूनां विवेकाभावं दर्शयति। अस्तु वा, अस्यार्थवादस्य स्वार्थे तात्पर्य्यम्, गो-शब्देन गवाभिमानि-देवतानां विवक्षितत्वात्। अतएव "अभिमानि-व्यपदेशस्तु" (ब्र०२अ०१पा०५सू०) इति सूत्रे भगवान् बादरायणः सर्व्वेषां मृदादि-वस्तूनां श्रुतिमूलत्वेनाभिमानि-देवताः प्रतिपादयामास। सर्व्वथा, मनुष्यमात्राधिकारकं स्मृतिशास्त्रम्।

'हितम्'—इति, अनेन शब्देन प्रयोजनं निर्दिश्यते। अभिमत-फल-साधनत्वं हि धर्म्मस्य हितत्वम्। तच्च फलं द्वेधा;—ऐहिकमामुष्मिकञ्च,(२)—इति। अष्टकादि-साध्यं(३) पुष्ट्यादिकमैहिकम्। आमुष्मिकं

* स य एवं विद्वान् संवत्सरमुपयन्ति,—इति स० सो० पुस्तकयोः पाठः।
† न विज्ञातं,—इति स० सो० पुस्तकयोः पाठः।

(१) विरुद्धानुवादकस्यार्थवादस्य न स्वार्थे प्रामाण्यमिति पूर्व्वोक्तमत्र स्मर्त्तव्यम्।
(२) अमुष्मिन् परलोके भवमामुष्मिकं पारलौकिकमित्यर्थः।
(३) "अष्टका रात्रिदेवता पुष्टिकर्म्म" (१प्र०६, खा०१, १६सू०) इति गोभिलसूत्रादष्टकायाः पुष्टिसाधकत्वं बोध्यं।

(१)"यागे यज्ञार्थ-इत्यादि ज्ञापकत्व-श्रुतेर्भवः।
फलवत्त्वं समाचष्टे नित्यानामपि कर्म्मणाम्"।

इति। तथा च मनुः,—

"वेदोदितं स्वकं कर्म्म नित्यं कुर्य्यादतन्द्रितः।
तद्धि कुर्व्वन् यथाशक्ति प्राप्नोति परमां गतिम्"।

इति। कूर्म्मपुराणेऽपि,—

यथाशक्ति चरेत्कर्म्म निन्दितानि विवर्ज्जयेत्।
विधूय मोह-कलिलं लब्ध्वा योगमनुत्तमम्।
गृहस्थो मुच्यते तस्मात् नात्र कार्य्या विचारणा"।

इति। ननु, कर्म्मणामभ्युदय-हेतुत्वं, निःश्रेयस-हेतुत्वन्तु न सम्भवति, प्रमाणाभावात्। प्रत्युत श्रुति-स्मृतिभ्यां तन्निषिध्यते।

"न कर्म्मणा न प्रजया धनेन"—

इति श्रुतिः।

"ज्ञानादेव तु कैवल्यम्"।

इति स्मृतिः। नैवम्। परमात्म-प्रकरणे निःश्रेयस-हेतु-वेदनेच्छा-साधनत्वेन यज्ञादीनां विधानात्, "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति; यज्ञेन दानेन"—इति श्रुतेः। निषेधस्तु साक्षान्निः-श्रेयस-साधनत्वं प्रतिषेत्स्यति। तस्मात्,—न मुमुक्षूणां सन्ध्याध्या-नादि-कर्म्मापेक्षा अस्ति। वेदनोत्पत्तौ सा विद्यते। एतच्च सूत्रि-तम्,—"अतएव चाग्नीन्धनाद्यनपेक्षा" (ब्र० ३अ० ४पा० २५सू०) "सर्व्वापेक्षा च यज्ञादिश्रुतेः" (ब्र० ३अ० ४पा० २६सू०)

---

(१) यद्यपीदं पठन्ति भाष्ये इति।

इत्याभ्यामधिकरणाभ्यां निर्णीतम्। तथा च, कर्म्मणां परम्परया मोक्षहेतुत्वं वायवीयसंहितायामभिहितम्,—

"कर्म्मोक्तनियमाचाराद्धर्म्मः *पाप-परिक्षयः(१)।
एवं प्रक्षीण-पापस्य बहुभिर्जन्मभिः क्रमात्।
भवेद्विषय-वैराग्यं वैराग्याद्भाव-शोधनम्।
भाव-शुद्ध्युपपन्नस्य शिव-ज्ञान-समन्वयः।
ज्ञान-ध्यान-नियुक्तस्य† पुंसो योगः प्रवर्त्तते।
योगेन तु परा भक्तिः प्रसादस्तदनन्तरम्।
प्रसादान्मुच्यते जन्तुर्मुक्तः शिव-समो भवेत्"।

इति। ननु, "प्रत्यवाय-परिहाराय, पुण्य-लोक-प्राप्तये, ब्रह्म-वेदनाय च, प्रतिदिनं‡ नित्य-कर्म्मणि-प्रयोगः प्राप्तः"(२)। तथा, खादिरवत् एकस्य प्रयुक्तस्यैव वचन-संयोग-भेदेन फलभेदोपपत्तेः। "खादिरो यूपो भवति"—इति क्रत्वर्थं वचनम्। "खादिरं§ वीर्य-

---

* पाप,—इति सु० पुस्तके पाठः।
† ज्ञान-ध्यानाभियुक्तस्य,—इति स० सो० पुस्तकयोः पाठः।
‡ प्रतिपादितं,—इति स० सो० पुस्तकयोः पाठः।
§ खादिरं,—इति सु० पुस्तके नास्ति।

---

(१) धर्म्मो यागादिः। पापमधर्म्मः। पापेति पाठे मल-कर्म्म माया-रोधशक्ति-लक्षणचतुर्विधः पाशो बोद्धव्यः। एतच्च शैवदर्शने प्रसिद्धम्। योगः चित्तवृत्त्यैकाग्र्यसंयम इति पाशुपतदर्शनोक्तो योगो बोध्यः। प्रसादः शैवदर्शनोक्तः शिवस्य प्रसन्नताविशेषः। योगप्रसादौ यथाक्रमं चित्तवृत्तिनिरोध-परवैराग्यापरनामधेयज्ञानप्रसादरूपावेव पातञ्जलोक्तौ वा मन्तव्यौ।
(२) प्रयोगोऽनुष्ठानम्। योगविद्याधिकरणसिद्धान्तवत् अत्रापि प्रयोग-भेदादेव फलभेदोऽस्तु इत्यभिप्रायः।

"योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय! ।
सिद्ध्यसिद्ध्योः समो भूत्वा, समत्वं योग उच्यते ।
कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्म्म फल-हेतुः————" ।

इत्यादिना। नित्य-कर्म्मणि तु शुद्धि-वृद्धिरेव प्रधानम्; फलमुपसर्जनम्[1]। अतएव, श्रूयमाणेनापि फलेन तदनित्यत्व-सातिशयत्व-दोष-दर्शन-रूपो विवेको न प्रतिबध्यते[2]। तदुक्तं वार्त्तिककारेण,—

"नित्येषु शुद्धेः प्राधान्यात् भोगोऽप्यप्रतिबन्धकः ।
भोगं भङ्गुरमीक्षन्ते शुद्धि-वृद्ध्यनुरोधतः" ।

इति। नित्यं च कर्म्म द्विविधम्; संस्कारकं विविदिषा-जनकञ्च। विहितत्व-मात्र-बुद्ध्या क्रियमाणं संस्कारकम्। तथा च स्मर्य्यते। "यस्यैते अष्टाचत्वारिंशत् संस्काराः[3] स ब्रह्मणः सायुज्यं सलोकतां गच्छति"* इति। ईश्वरार्पण-बुद्ध्या क्रियमाणं विविदिषा-जनकम्। तत्र, भगवतेरितम्,—

---

* यस्यैते चत्वारिंशत्संस्कारा अष्टावात्मगुणाः प्राज्ञः,—इत्यादिपाठः मु० पुस्तके।

---

(१) प्रधानफलम् पापक्षयातिरिक्तानुषङ्गिकमपरं। [illegible]-नुषङ्गिकत्वं।

(२) अनित्यत्वं यस्य तस्य यदि स्वर्गेऽप्यनुमितम्। "तद्यथेह कर्म्म-चितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते"—इति श्रुतिसिद्धञ्च। सातिशयत्वं तारतम्यवत्त्वम्। परस्परसुखयोरपि हीनत्वपरं पुनर्दुःखाकरोति इति तत्र विवेकोपयोगः।

(३) अष्टाचत्वारिंशत्संस्कारास्तु गौतमादिभिरुक्ताः।

तथा संगृहीतत्वात् । अतोऽत्र धर्मस्य विषमत्वम्'—इत्यत्रोक्तम्, 'शौचाचारम्'—इति । अयं भावः । द्विविधो धर्मः ; श्रौतः स्मार्त्तश्च । तत्र, * आचमनादि-पूर्वकोऽधीत-प्रत्यक्ष-वेद-मूलोऽग्नि-होत्र-पौर्णमासादिः श्रौतः, अनुमित-परोक्ष-शाखा-मूलः शौचाचमनादिः स्मार्त्तः । तत्र आचमनादेः कल्प-सूत्रेषु संग्रहेऽपि शौचादेरसंग्रहात् विषमत्वम्,—इति ।

ननु स्मृत्यन्तरेष्वपि शौचादिरुक्तः,—इत्यत्राह,—'वर्त्तमाने कलौ युगे'—इति । कलौ युगे वर्त्तमाने सति, पाकमात्राद्यशक्तानां जीवनाय यथापूर्वैः, मानुषाणां जीवनाय, अभ्युदयाय,† निःश्रेयसाय च, हितः, सुकरोपायो धर्मः,—ब्राह्मण-कर्त्तृकः कृष्यादिः, योऽत्र ग्रन्थान्तेन प्रतिपाद्यते, इति ग्रन्थ-सम्बन्धात् विषमत्वम्,—इत्यर्थः ।

'यथावत्'—इतिपदेन कार्त्स्न्याभिधायिना‡ सङ्कोचं निवारयति । अतः सर्वथा कथनम् निवार्यते, आहुर्वा आप्त-विप्रलम्भाद्यप्रसङ्गः§(१), अतएव 'सत्यवती-सुत !'—इति सम्बोधनम् । यदा, योषिदपि सती‖ माता, सत्य-वादिनी, तदा किमु वक्तव्यं वेदार्थज्ञ-पुत्रः सत्य-वादी,—इति । 'च'कारेण सु-प्रश्नं समुच्चिनोति ।

---

* आचमनादि,—इति स० से० पुस्तकयोः पाठः ।

† जीवनाभ्युदयाय,—इति सु० पुस्तके पाठः ।

‡ कार्त्स्न्यमभिदधानः—इति स० से० पुस्तकयोः पाठः ।

§ आहुर्वामभ्यासविप्रलम्भाद्या तदप्रसक्तेः,—इति सं० से० पुस्तकयोः पाठः ।

‖ योषिदपि सत्यवती,—इति सु० पुस्तके पाठः ।

---

(१) भ्रमादिभिरेव मिथ्यावचनं सम्भवतीतिभावः । इदमत्रावधेयम् । वक्तॄणां सर्वेषां आप्तत्वसिद्धिः प्रमाणविशेषाभावादनुपपन्ना प्रति-

इति। सुमन्तु-वैशम्पायन-जैमिनि-पैलैः चतुर्वेद-प्रवर्त्तकैः; पुराण-प्रवर्त्तक-सूत-सहितैः, शिष्यैः सह वर्त्तते,—इति सशिष्यः। यथा अग्नि-र्ज्वालाभिरुपेतः, यथा सूर्य्यो रश्मिभिः, एवमसौ स्वसमान-शिष्यैः शिष्यै-रुपेतः। अतएव महातेजसम्। तेजः-शब्देनात्र ब्रह्म-वर्चसं(१) विव-क्षितम्, इतरेण तेजसा प्रयोजनाभावात्। तामेव विवक्षां *'श्रुति-वि-शारदः'—इत्यनेन स्पष्टयति। श्रुति-स्मृत्योः क्रमेणाग्न्यर्क-दृष्टान्तौ योजनीयौ। अग्निः सन्निकृष्टमेव दहत्यपि, अहनि रात्रौ चाविशेषेण दहति; एवमधीयमान-प्रत्यक्ष-श्रुतिषु कतिपयाएव धर्म्माः †प्रका-शमानाभवन्ति। उत्सन्नशाखास्वनुत्सन्नशाखास्वाविशेषेण‡ प्रकाशन्ते§। अर्कोऽहन्येव भासयत्यपि, सन्निकृष्टं विप्रकृष्टञ्च सर्व्वं भासयति। एवं उत्सन्नशाखास्वेव अधीयमानास्वपि, विप्रकीर्णानेक-शाखा-स्थित-धर्म्माः सर्व्वेऽपि प्रकाश्यन्ते। अथ वा,—तपसा अत्यन्त-परिशुद्धोऽयम्,—इत्यभिप्रायेण, अग्नि-दृष्टान्तः। "अग्निः शुचि-व्रत-तमः"|| इति श्रुतेः। मूढ-विषयाभिव्यक्ति-वत्त्वे, अर्क-दृष्टान्तः॥

ननु, एवं सति, 'न चाहं सर्व्व-तत्त्व-ज्ञः'—इति वचनं व्याहतम्, न, तस्य पितृ-प्रशंसा-रूपार्थ-वादत्वात्। "अयज्ञेनाक्ले ओ-

---

* श्रुतिस्मृतिविशारदः,—इति स० से० पुस्तकयोः पाठः।
† प्रकाशमाना,—इति सु० पुस्तके पाठः।
‡ उत्सन्नशाखास्व विशेषेण,—इति स० से० पुस्तकयोः पाठः।
§ प्रकाशन्ते,—इति सु० पुस्तके पाठः।
|| शुचिर्व्रततमः,—इति स० से० पुस्तकयोः पाठः।

---

(१) ब्रह्मवर्चसं वेदाध्ययनतदर्थज्ञानतदनुष्ठानजं तेजः।

सर्वेभ्यः"—इति वचनं यथा ज्ञान-प्रशंसार्थं, न यज्ञादीनां पशुत्वं निषेधति; प्रत्यक्ष-विरोधात्, अग्नीषोमीयादि-पशु विरोधाच्च, एव-मिदं व्यास-वचनं न व्यासस्य धर्मज्ञत्वं निषेधति, किन्तु पितरं प्रशंसति। यद्वा,—गुरु-विषये शिष्यः कर्त्तव्यः,—इत्याचार-शिक्षा-र्थमिदमुक्तम्। अथ वा,—'मयाहम्'—इति यदेतद्व्यासस्याज्ञत्वम्;—तत्प्रति कलि-धर्माः पृच्छ्यन्ते, *न तावदहं तात कलि-धर्म-तत्त्वं जानामि, यस्मात् पितुरेव तव प्राधान्यात्; यतश्च, "कलौ पाराशर-स्मृतिः"—इति वक्ष्यते, यदि, पितृ-प्रसादात् मम तदभिज्ञानम्,† तर्हि, स एव पिता प्रष्टव्यः; न हि, मूल-कर्त्तरि लभ्यमाने, प्रशा-खिका(१) युज्यते,—इति।

पालनात् 'पिता'। पालकत्वं च अत्र, कलि-धर्मोपदेशेन,—इति प्रसङ्गानुसारेण द्रष्टव्यम्। अनयैव विवक्षया जनक-शक्त्यादि‡ सम्बन्धानुपेक्ष्य पितृ-शब्दं प्रयुङ्क्ते। 'एव'कारेण, अन्ये धर्माचार्या व्यावर्त्तिताः§। यद्यपि, अन्येऽपि कलि-धर्माभिज्ञाः, तथापि, पराशर-कल्पित विषये तपोविशेष-प्रभावादसाधारणः कश्चिदतिशयो द्रष्टव्यः। यथा, काण्व-माध्यन्दिन-काठक-कौथुम-तैत्तिरीयादि-शाखासु कण्वा-दीनामसाधारण्यम्,(२) तद्वदवगन्तव्यम्।

---

* अत्र, 'तत्'—इति नास्ति स० सो० पुस्तकयोः।
† तदभिज्ञानं—इति मु० पुस्तके पाठः।
‡ शक्त्यादि,—इति स० पुस्तके पाठः।
§ व्यावर्त्त्यन्ते,—इति मु० पुस्तके पाठः।

---

(१) प्रशाखिका—परम्परा।
(२) वैशम्पायनेऽपि सर्वां शाखामधीतवान्, पाठः पुनरेषां, न तत्र शक्त-

'व्यासः सुतः' इत्युक्तेरयमाशयः;—कलि-धर्म-सम्प्रदायोपेतस्यापि पराशर-सुतस्य यदा तद्धर्म-रहस्याभिधाने सङ्कोचः, तदा किमु वक्तव्यमन्येषाम्,—इति । तदेवं व्यास-मुखेन पराशरे गौरवातिशय-बुद्धिमुत्पादयितुं पराशर-सत्यवतारेऽपि व्यासं प्रति प्रश्नेन व्यधिकरणः,—इत्यवगन्तव्यम् ॥

यथाविधि-गुरूपसत्त्या विद्या-प्राप्तिः,—इत्यभिप्रेत्य, उपसत्तिं दर्शयति,—

**ततस्ते ऋषयः सर्वे धर्म-तत्त्वार्थ-काङ्क्षिणः ।**
**ऋषिं व्यासं पुरस्कृत्य गत्वा* बदरिकाश्रमम् ॥ ५ ॥**

इति । सर्वेषु वस्तुषु सामान्येन ज्ञाते विशेषेणाज्ञाते ज्ञाना-काङ्क्षा भवति । धर्म-शब्दोऽत्र सामान्यमभिधत्ते, तत्त्वार्थ-शब्दो विशेषम् । तत्र, सामान्यम्—अधीत-वेदेन कृत-व्याकरणेन सकल-प्रमाण-कुशलेन[1] पुरुषेण ज्ञायते । वेदोऽपि धर्म-सामान्यं निरूपयति;—"धर्मो विश्वस्य जगतः प्रतिष्ठा"—इति । [2]शाखान्तराध्ययि-

---

* गत्वा,—इति स० सो० मु० मू० पुस्तकेषु । जग्मुः,—सो० मू० पुस्तके पाठः ।

---

यज्ञ-परिकर्मोपाख्यातिशयोऽन्येभ्यो विशिष्यते । इतश्चिन्त्यमेव कठादि-संज्ञाविशेषाः शाखाविशेषाणाम् । तथा च जैमिनिसूत्रम् । "आख्या-प्रवचनात्" (मी० १ अ०, १ पा० ३ सू०) इति । प्रकृष्टं वचनं प्रवचनम् । तत्कृता कठादिसमाख्या वेदशाखानामिति सूत्रार्थः ।

(१) समानासमानजातीयेभ्यो व्यवच्छेदनम् यत्, तत् लक्षणम् । प्रमिति-साधनं प्रमाणम् ।

(२) ननु कस्यां शाखायामियं श्रुतिरस्ति तच्छाखाध्यायिभिः धर्मं सामान्यतो

निधीयते । वर्ष-कालेऽपि अविच्छिन्नेन नदी-प्रवाहेण स्नान-निवृ-त्ति-पानावगमः । पुण्यतीर्थं* विष्णु-गङ्गादि† । पुण्य-तीर्थ-शोभया च आश्रमस्यैतस्य तपोऽतिशय-जनकत्वे हेतुरुपन्यस्तः ॥

मृगादीनामन्योन्य-वैर-त्यागेन निर्भयत्वां विस्रम्भोद्योतनात्, तेनाहिंसाऽनुष्ठान-सिद्धिर्दर्शिता । तथाच योग-शास्त्रे पतञ्जलिः, यम-नियमादीनां क्रमेण सिद्धि-चिह्नानि(१) सूचयन् अहिंसा-सिद्धिं सूचयामास;—"तत्सन्निधौ वैर-त्यागः"—(२ पा० ३५ सू०)(२) इति।

पूर्वं महर्षयोऽत्र तपश्चरन्तः एकैकं देवत्वं निर्विविशिरे‡ तैः सर्वैराश्रितत्वम्—अस्याश्रमस्य तपोऽतिशय-हेतुतायां, सर्व-सम्प्रतिप-त्तेर्लिङ्गम्(३)। अथवा,—चन्द्र-सूर्यादयो देवाः पूर्वस्मिन् जन्मनि मनुष्याः सन्तोऽत्रैव नानाविधेष्वायतनेषु तपस्तप्त्वा देवत्वं लेभिरे,—इति विव-क्षया देव-नामाङ्कितैरायतनैराश्रितम्,—इत्युक्तम् । यक्षादयः§ पूर्व-जन्मानुष्ठित-तपः-फलं देव-योनित्वमनुभवन्तोऽप्यत्रागत्य एतदीय-

---

* उग्रतीर्थं,—इति सु० पुस्तके पाठः ।

† विष्णुपदादि,—इति स० से० पुस्तकयोः पाठः ।

‡ निर्विविशवन्तः,—इति स० से० पुस्तकयोः पाठः ।

§ यक्षादयः,—इति स० से० पुस्तकयोः पाठः । एवं परत्र ।

---

(१) यमनियमादयश्च,"यम-नियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयोऽष्टावङ्गानि" (२ पा०, २९ सू०) इति योगसूत्रोक्ताः। एषां विवरणं तत्रैव द्रष्टव्यम् ।

(२) तस्य अहिंसा-प्रतिष्ठस्य सन्निधानात् स्वाभाविक-वैराणामप्यहि-नकुला-दीनां वैरत्यागो भवतीत्यर्थः ।

(३) यदि हि अस्याश्रमस्य तपोऽतिशय-हेतुतायां कस्यचिद्विप्रतिपत्तिः स्यात्, तदा सर्वैरायतनैः तत्र तपश्चरणं देवत्व-भोगश्च नोपपद्यते,—इति भावः ।

तपोऽनियमं दृष्ट्वा ह्यप्सरसो नृत्यन्ति गायन्ति च। अनेन देवैरपि प्रार्थनीयत्वम् आश्रमस्य प्रदर्शितम्। युक्तं चैतत्, देव-जन्मनोऽप्युत्तमस्य(१) फलस्याऽस्य सम्पादयितुं शक्यत्वात्। अथवा,—शुकादयो मुमुक्षवः सन्तोऽप्यागत्य *मोक्ष-साधनत्वेन नृत्त-गीताभ्यां† ईश्वरं भजन्ते। अत एव याज्ञवल्क्येनेदमुक्तम्—

"वीणा-वादन-तत्त्वज्ञः श्रुति-जाति-विशारदः।
तालज्ञश्चाप्रयासेन मोक्ष-मार्गं नियच्छति"(२)॥

इति॥

गुरूपसत्तावनुष्ठेयं प्रकार-विशेषं दर्शयति,—

**तस्मिन्नृषि-सभा-मध्ये ‡शक्ति-पुत्रं पराशरम्।**
**सुखासीनं महातेजाः§ मुनि-मुख्य-गणावृतम्॥८॥**
**कृताञ्जलि-पुटो भूत्वा व्यासस्तु ऋषिभिः सह॥।**
**प्रदक्षिणाभिवाद्यैश्च स्तुतिभिः समपूजयत्¶॥९॥**

* मोक्ष,—इति मु॰ पुस्तके नास्ति।
† नृत्यगीताभ्यां,—इति स॰ सो॰ पुस्तकयोः पाठः।
‡ शक्तिं,—इति मु॰ मू॰ पुस्तके पाठः।
§ महात्मानं,—इति मु॰ मू॰ पुस्तके, महातेजोमुनिमुख्य,—इति सो॰ मू॰ पुस्तके पाठः।
|| व्यासश्च ऋषयस्तथा,—इति सो॰ मू॰ पुस्तके पाठः।
¶ पर्य्यपूजयत्, इति सो॰ मू॰ पुस्तके पाठः

(१) मोक्षरूपस्येत्यर्थः।
(२) श्रुतिर्नाम स्वरावयवः शब्दविशेषः। जातयः षड्जाद्याः स्वरभेदाः सप्त शुद्धाः, सङ्कीर्णाश्चैकादश। मिलिता अष्टादश भवन्ति। तालः कालक्रियामानं गीतप्रमाणमिति यावत्।

इति । 'तस्मिन्',—इति भावमेवोक्तिः । सकलमाध-धर्माणामशेष-मुनि-सम्मतत्वं दर्शयितुम्, 'ऋषि-सभा'—इत्युक्तम् । ऋषिष्वपि विशेषेण स्मृति-कारिणां गोत्र-प्रवर्त्तकानां(१) च, ऋषि-याज्ञवल्क्यादीनां सम्पत्तिं विवक्षिता आह, 'मुनि-मुख्य'—इति । न केवलं तपोबलेन पराशरस्य महिमा, किन्तु विशिष्ट-जन्मनापि,—इत्याह, शक्ति-पुत्रम्,—इति । अयञ्च महिमा, 'पराशर'—शब्द-निर्व्वचन-पर्य्यालोचनया विस्पष्टमवगम्यते । तच्च निर्व्वचनं महद्भिरुदाहृतम्,—

"पराकृताः शराः यस्मात् राक्षसानां बधार्थिनाम् ।
अतः पराशरो नाम ऋषिरुक्तो मनीषिभिः ।
परस्य कामदेवस्य शराः सम्मोहनादयः(२) ।
न विद्यन्ते यतस्तेन ऋषिरुक्तः पराशरः ।
परेषु पाप-चित्तेषु नादत्ते कोप-सायकम् ।
शरं, यस्मात् ततः प्रोक्त ऋषिरेव* पराशरः ।
परं मातुर्निजाधायदुदरं तदयं यतः ।
अथश्चाध्यं निर्भिद्य निरगात् स पराशरः" ।

इति । 'मुख्य'-शब्देनैकाग्र्यं च विवक्षितम्;—चित्तस्यायोग-विक्षेप-

* ऋषिरेव,—इति मु० पुस्तके पाठः ।

(१) गोत्रं वंशपरम्पराप्रसिद्धमादिपुरुषब्राह्मणरूपम् । तच्च काश्यपादि प्रसिद्धमेव ।

(२) सम्मोहनादयश्च,—"सम्मोहनोन्मादनौ च शोषणस्तापनस्तथा । स्तम्भनश्चेति कामस्य पञ्च बाणाः प्रकीर्त्तिताः"—इत्यनेनोक्ताः ।

परिहारेणैकाग्र्यं यथा भवति, तथोपविष्टमित्यर्थः । ऐकाग्र्य-स्वाधीन-महातेजः-पदानि पूर्वं व्याख्यातानि ॥

'भक्ति'-पदेन भक्त्यतिशयोऽत्रोच्यते । परया भक्त्या गुरूपदिष्टार्थ-तत्त्वमाविर्भवति । तथाच, श्वेताश्वतर-शाखायां श्रूयते,—

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" ।

इति । अन्तरेण गुरुभक्तिमुपदिष्टोऽप्यर्थो निष्फलो भवति । तदपि क्वचित् श्रूयते,—

"अध्यापिता ये गुरून्* नाद्रियन्ते
विप्रा वाचा मनसा कर्मणा वा ।
यथैव ते न गुरुभिर्भोजनीयाः†
तथैव तान् न भुनक्ति श्रुतं तत्" ।

इति । यथा गुरुमनाद्रियमाणाः शिष्याः न गुरुणा पालनीयाः(१) तथा तत् श्रुतमपि तान्‡ शिष्यान् स्व-फल-दानेन न पालयति,—इत्यर्थः । देववद्गुरोः पूजनीयत्वात् तस्मिन् प्रदक्षिणादयोऽनुष्ठीयन्ते । तर्हि, आवाहनासन-स्वागतादयोऽप्युपचाराः प्राप्यन्ते,—इति चेत्, प्राप्यन्तां नाम, प्रदक्षिणादीनामुपलक्षणत्वात् । अथवा,—दूरादागत्य

* गुरुं,—इति ख० घो० पुस्तकयोः पाठः ।
† गुरोर्भोजनीयाः,—इति ख० घो० पुस्तकयोः पाठः ।
‡ तत् श्रुतमपि तान्,—इति ग० पुस्तके पाठः ।

(१) 'भुजपालनाभ्यवहारयोः'—इति धातुपाठादयमर्थो लभ्यते ।

गुरु-दर्शनं कुर्व्वतामुचिताः प्रत्युत्थानादयएव,—इति तात्पर्य्योऽत्र निर्द्दिश्यन्ते ॥

शिष्योपसत्तेर्यथाविधित्वं द्योतयितुं, गुरोः परितोष-पूर्व्वकं कृपा-विशेषमादर्शयति,—

ततः * सन्तुष्ट-हृदयः† पराशर-महामुनिः ।
आह सुस्वागतं ब्रूहीत्यासीनो मुनि-पुङ्गवः ॥१०॥

इति । गुरु-सन्तोषस्य श्रेयोहेतुत्वमन्वय-व्यतिरेकाभ्यां पुराणसारेऽभिहितम्,—

"गुरावतुष्टेऽतुष्टाः स्युः सर्व्वे देवाः द्विजोत्तमाः! ।
तुष्टे तुष्टायतस्तस्मात् सर्व्व-देवमयो गुरुः ।
श्रेयोऽर्थी यदि; गुर्व्वाज्ञां मनसाऽपि न लङ्घयेत् ।
गुर्व्वाज्ञा-पालकोयस्मात् ज्ञान-सम्पत्तिमश्नुते" ।

इति । आदर-पूर्व्वकेण स्वागत-प्रश्नेन कृपाविशेषोदर्शितः । आद-रार्थं सु-शब्दस्य द्विरुक्तिः(१) । अथवा,—सु-शब्देनैकेन आगमने‡ लौकिकं सौख्यमुक्तम्, द्वितीयेन यथाविध्युपपत्ति-लक्षणं शास्त्रीयं सौष्ठवमुच्यते । ऋषिष्वागतेषु पराशरेणाभ्युत्थातव्यम् § इति महा

---

* अथ,—इति स०, बो०, शु० मू० पुस्तकेषु पाठः ।
† सन्तुष्ट-मनसा,—इति शु० मू० पुस्तके पाठः ।
‡ आगमने,—इति शु० पुस्तके नास्ति ।
§ पराशरेणाप्युत्थातव्यम्,—इति मु० पुस्तके पाठः ।

---

(१) स्वागतशब्देऽपि सुशब्दस्य प्रविष्टत्वात् अस्य द्विरुक्तिरिति बोध्यम् ।

धारयति 'व्यासीनः'—इति। तच्च हेतुत्वेन पराशरोमहामुनि-श्रुति-पुङ्गव-शब्द-द्वयेन* विशिष्यते। महामुनि-श्रुतिपुङ्गव-शब्दौ क्रमेण तपसा विद्यया च श्रेष्ठत्वमाहतुः। उभयविध-श्रैष्ठ्यात् न कोनो-ऽप्युत्थातव्यम्॥

व्यासीनेन यथा स्वागतं पृष्टम्, एवमागतेनाप्यवस्थितस्य कुशलं प्रष्टव्यम्। अतः प्रथमं तत् पृष्टा† गुरुणा स्वकीये कुशलेऽभिहिते सति पश्चात् शुश्रुषितार्थं पृच्छति,—इत्याह,—

**कुशलं सम्यगित्युक्ता व्यासः पृच्छत्यनन्तरम्‡ ।**

इति। उक्ता, गुरु-मुखात् कुशलं श्रुत्वा च,—इत्यध्याहृत्य§ योजनीयम्॥

शुश्रुषितार्थं प्रश्न-प्रकारं दर्शयति,—

**यदि जानासि भक्तिं मे|| स्नेहाद्वा भक्त-वत्सल ॥११॥**
**धर्म्मं कथय मे तात! अनुग्राह्योऽस्म्यहं तव¶ ।**

---

* पराशरः शब्दद्वयेन,—इति स० सो० पुस्तकयोः पाठः।

† ततः प्रथमं तत्त्वविदा,—इति मु० पुस्तके पाठः।

‡ व्यासः सुखागतं ये च ऋषयस्तु समन्ततः। कुशलं सम्यगित्युक्ता व्यासोऽपृच्छत्ततः परम्,—इति सो० मू० पुस्तके पाठः। मु० मू० पुस्तके तु, पूर्व्वार्द्धमेवमेव। उत्तरार्द्धे तु,—कुशलं कुशलेत्युक्ता व्यासः पृच्छत्यतः परम्,—इति विशेषः।

§ इत्याहृत्य,—इति स० सो० पुस्तकयोः पाठः।

|| मे भक्तिं—इति सो० मू०, मु० पुस्तकयोः पाठः।

¶ अनुग्राह्योऽप्यहं तव,—इति मु० पुस्तके, अनुग्राह्योजनस्तव,—इति सो० मू० पुस्तके पाठः।

इति। पिता शिष्यः पुत्रो वा रहस्योपदेशमर्हति, नेतरः। सोऽयमर्थः छन्दोगैर्मधु-विद्यायामाम्नायते। "इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्याय(१) वाऽन्तेवासिने नान्यस्मै* कस्मैचन"— इति। अतोऽत्र, व्यासस्य पुत्रत्वं शिष्यत्वं च अस्ति,—इत्यभिप्रेत्य पक्ष-द्वयोपन्यासः। यदि लिङ्गैर्मदीये मानसे भक्ति-विशेषोऽनुमीयते, तदा तत्र भक्त-वत्सलत्वात् शिष्य-बुद्ध्या मामनुग्रहाण, अननुमानेऽपि पुत्र-स्नेहात् अनुग्राह्योऽहम्। सर्व्वथाऽप्युपदेष्टव्य एव धर्म्मः॥

ननु, सन्ति बहवो धर्म्माः मन्वादिभिः प्रोक्ताः, तत्र को धर्म्मो भवता बुभुत्सितः? इत्याशङ्क्य, बुभुत्सितं परिशेषयितुं बहून् धर्म्मानुपन्यस्यति,—

**श्रुता मे मानवा धर्म्मा वाशिष्ठाः काश्यपास्तथा ॥ १२ ॥**
**गार्गेया गौतमीयाश्च† तथा चौशनसाः श्रुताः‡ ।**
**अत्रेर्विष्णोश्च संवर्त्तात् दक्षादङ्गिरसस्तथा§ ॥ १३ ॥**

---

* प्राणाय्यायवेऽन्तेवासिने वाऽन्यस्मै,—इति मु० पुस्तके पाठः।

† गार्गेय-गौतमीयाश्च,—इति मु० पुस्तके पाठः।

‡ 'श्रुताः' इत्यत्र, स्मृताः—इति स० सो० पुस्तकयोः पाठः। इदं श्लोकार्द्धमेवान्यत्रान्यथा पठितम्। तथाहि,—गार्गेया गौतमाश्चैव तथा, चौशनसाः स्मृताः,—इति मु० मू० पुस्तके, गार्ग्य-गौतमधर्म्माः तथा-प्रौमाणकस्य च,—इति सो० मू० पुस्तके पाठः।

§ अत्रेर्विष्णोश्च सांवर्त्तदाक्ष्या आङ्गिरसस्तथा,—इति मु० मू० पुस्तके, अत्रेर्विष्णोश्च संवर्त्तादक्षादङ्गिरस एव च,—इति सो० मू० पुस्तके-पाठः।

---

(१) प्रणाय्याय सम्मताय।

शातातपाच्च हारीतात् याज्ञवल्क्यात्तथैव च* ।
आपस्तम्ब-कृता धर्म्माः शङ्खस्य लिखितस्य च ॥ १४ ॥
कात्यायन-कृताश्चैव तथा प्राचेतसान्मुनेः† ।

इति। 'ते श्रुताः' मया श्रुताः,—इत्यर्थः। संबन्ध-सामान्य-वाचिन्याः षष्ठ्याः‡ कर्त्तृ-कृति-लक्षणे विशेषे पर्य्यवसानात्। 'अत्रेः'—इत्यादीनां पञ्चम्यन्तानां 'श्रुताः'—इत्यनेनानुषक्तेन संबन्धः। आपस्तम्बेन कृताः प्रोक्ताः,—इति यावत्। शङ्खस्य लिखितस्य च संबन्धिनो धर्म्माः(१)। ताभ्यां प्रोक्तत्वं तत्संबन्धित्वम्। प्रचेता एव प्राचेतसः। वायस-राक्षसादाविव स्वार्थे तद्धितः(२)। अस्तु वा, प्रचेतसः पुत्रः कश्चित् धर्म्मशास्त्रकारः।

ननु, मानवादयः(३) स्मार्त्त-धर्म्माः श्रुताश्चेत्, तर्हि मा नाम ते बुभुत्सन्तां श्रौतांस्त्विदानीं पारत्रिकोबुभुत्सिष्यन्ते§ इत्याशङ्क्याह,—

---

* शातातपाच्च हारीता याज्ञवल्क्यकृताश्च ये,—इति मु॰ मू॰ पुस्तके, शातातपस्य हरितः याज्ञवल्क्यकृतास्तथा,—इति सो॰ मू॰ पुस्तके पाठः।

† प्राचेतसकृताश्च ये,—इति मु॰ मू॰ पुस्तके पाठः। आपस्तम्ब,—इत्यादि, कात्यायन, इत्यादि श्लोकार्द्धद्वयं विपर्य्यस्य पठितं मु॰ मू॰ पुस्तके, सो॰ मू॰ पुस्तके च।

‡ संबन्धसामान्यवाचिन्या षष्ठ्या,—इति मु॰ पुस्तके पाठः।

§ बुभुत्सन्ते,—इति मु॰ पुस्तके पाठः।

---

(१) श्रुताः,—इत्यनुषङ्गेणान्वयोऽवगन्तव्यः।

(२) वयः (पक्षी) एव, वायसः, रक्ष एव राक्षसः,—इति स्वार्थे तद्धितः।

(३) मन्वादिभिः मानवाः (प्रोक्तत्वं तत्सम्बन्धः) ते आदयो येषां स्मार्त्तधर्म्माणां ते तथोक्ताः।

**श्रुताश्चैते भवत्-प्रोक्ताः स्मृत्यर्थास्ते* न विस्मृताः ॥ १५ ॥**
**अस्मिन् मन्वन्तरे धर्म्माः कृत-त्रेतादिके युगे ।**

इति । ये प्रत्यक्ष-श्रुतीनामर्थाः अग्निहोत्रादयो धर्म्माः, एते मया श्रुताः । यद्येतत् तथापि प्रसिद्धम्,—इति द्योतनार्थोऽपि-शब्दः । तत्र हेतुः; 'भवत्-प्रोक्ताः'—इति । व्यासः पराशरादधीतवान्,—इति पौराणिकाः । श्रुतानामपि विस्मृतिश्चेत्, पुनरपि श्रवणमपेक्षेत†,—इत्याशङ्क्य 'न विस्मृताः'—इत्युक्तम् । प्रायेणाग्निहोत्रादीनां कलौ दुर्लभत्वमभिप्रेत्य 'कृत-त्रेतादिके' इत्युक्तम् । आदि-शब्देन द्वापरं गृह्यते । 'अस्मिन् मन्वन्तरे'—इति निर्देशः प्रदर्शनार्थः । नतु, मन्वन्तराण्यतीतान्यनागतानि वा व्यवच्छिद्यन्ते । तद्व्यवच्छेदे प्रयोजनाभावात् । न हि, नानाविधेषु मन्वन्तरेषु धर्मं भिद्यमानं क्वचिदुपलभामहे । अस्मिन् मन्वन्तरे कृतादिकेषु युगेषु प्रायेण समाश्रितानुष्ठानाः प्रत्यक्ष-श्रुत्यर्थाः ये धर्म्माः, तेऽपि मान्वादि-स्मार्त्त-धर्म्मवत् श्रुतत्वात् बुभुत्सिताः ॥

इदानीं परिशिष्टं बुभुत्सितं पृच्छति,—

**सर्व्वे धर्म्माः कृते जाताः सर्व्वे नष्टाः कलौ युगे ॥ १६ ॥**
**चातुर्व्वर्ण्य-समाचारं किञ्चित् साधारणं वद ।**

इति । सर्व्व-धर्म्मोद्देश-कालावस्थादि-भेदेन धर्म्माणां बहुविधत्वमाचष्टे । एतच्च महाभारते आनुशासनिके पर्व्वणि उमा-महेश्वर-संवादे प्रपञ्चितम्,—

---

* श्रौतार्थास्ते,—इति क०, सो०, मु० मू० पुस्तकेषु पाठः ।
† श्रवणमपेक्षेत,—इति समीचीनः पाठः ।

"धर्म्माः बहुविधाः* लोके श्रुति-भेद-मुखोद्भवाः(१)।
देश-धर्म्माश्च दृश्यन्ते कुल-धर्म्मास्तथैव च।
जाति-धर्म्माः वयो-धर्म्माः गुण-धर्म्माश्च शोभने!।
शरीर-काल-धर्म्माश्च आपद्धर्म्मास्तथैव च(२)।
एतद्धर्म्मस्य नानात्वं क्रियते लोक-वासिभिः"।

इति। ते च सर्व्वे धर्म्माः प्राणिभिः कृत-युगे यथावदनुष्ठिताभवन्ति, युग-सामर्थ्येन धर्म्मस्य चतुष्पदोऽपि अपरिक्षयात्†। त्रेतादिषु क्रमेण क्षीयमाणाधर्म्माः कलि-युगावसाने सर्व्वात्मना विनष्टाभवन्ति। तदेतत् सर्व्वं पुराण-सारे‡ विस्तरेण प्रदर्शितम्,—

"कृते चतुष्पात् सकलोव्याजोपाधि-विवर्ज्जितः§।

---

* चतुर्व्विधाः,—इति स० सो० पुस्तकयोः पाठः।
† अपरिक्षयः,—इति मु० पुस्तके पाठः।
‡ पुराणसारेण,—इति स० सो० पुस्तकयोः पाठः।
§ निर्व्याजोपाधिवर्ज्जितः,—इति स० सो० पुस्तकयोः पाठः।

---

(१) मुखशब्दोऽत्र आद्यर्थः। श्रुतिभेदमुखेभ्य उद्भवो येषां ते तथोक्ताः।

(२) देशधर्म्माः प्राच्यादिभिरनुष्ठीयमाना होलाकादयः। कुलधर्म्माः, "वासिष्ठाः पञ्चचूडाः स्युः"—इत्यादयः। जातिधर्म्माः ब्राह्मणादीनां याजनादयः। वयोधर्म्माः अष्टवर्षस्योपनयनमित्येवमादयः। गुणधर्म्माः अभिषिक्तस्य प्रजापालनमित्यादयः। यथेदमुक्तम्, "यो गुणेन प्रवर्त्तेत गुणधर्म्मः स उच्यते। यथा मूर्द्धाभिषिक्तस्य प्रजानां परिपालनम्"—इति। शरीरधर्म्माः कृष्णकेशस्याधानं पलितच्छिद् यौवन-गमनमित्यादयः। कालधर्म्माः संक्रान्त्यादौ दानादयः। आपद्धर्म्माः आपदि सर्व्वेषामनन्तरावृत्तिरित्यादयः।

वृषः(१) प्रतिष्ठितो धर्म्मो मनुष्येष्वभवत्* पुरा ।
धर्म्मः पाद-विहीनस्तु त्रिभिरंशैः प्रतिष्ठितः—
त्रेतायां, द्वापरेऽर्द्धेन व्यामिश्रो धर्म्म उच्यते† ।
त्रि-पाद्-हीनस्तिष्ये तु सत्ता-मात्रेण तिष्ठति" ।

इति । तिष्यः कलिः । तथा वृहस्पतिरपि‡—

"कृतेऽभूत् सकलो धर्म्मस्त्रेतायां त्रिपदः§ स्थितः ।
पादः प्रविष्टोऽधर्म्मस्य मत्सर-द्वेष-सम्भवः(२) ।
धर्म्माधर्म्मौ समौ भूत्वा द्विपादौ द्वापरे स्थितौ ।
तिष्येऽधर्म्मस्त्रिभिः पादैः ||धर्म्मः पादेन संस्थितः" ।

इति । तथा विष्णु-पुराणे कलौ धर्म्म-नाशं प्रस्तुत्य तद्धेतुत्वेन पुरुष-दोषउपन्यस्तः,—

"यासे कृते तु योऽधर्म्मः स त्रेतायां प्रवर्त्तते ।
द्वापरे व्याकुलीभूतः प्रणश्यति कलौ युगे ।
तिष्ये मायामसूयाञ्च वधञ्चैव तपस्विनाम्—

---

* मनुष्येष्ववसत्,—इति स० सो० पुस्तकयोः पाठः ।
† द्वापरे त्वर्द्धं तथा धर्म्मोऽवतिष्ठते,—इति स० सो० पुस्तकयोः पाठः ।
‡ वृहस्पतिनापि,—इति मु० पुस्तके पाठः ।
§ त्रिपदि,—इति मु० पुस्तके पाठः ।
|| तिष्ये धर्म्मः स्थितिः पादैः,—इति मु० पुस्तके पाठः ।

---

(१) वृषः वृषरूपी ।
(२) मत्सरद्वेषसम्भवोऽधर्म्मस्य पादः धर्म्मस्य चतुर्थपादस्थाने प्रविष्ट इत्यर्थः ।

साधयन्ति नरास्तत्र तमसा व्याकुलेन्द्रियाः"।

इति। विष्णु-पुराणेऽपि,—

"वर्णाश्रमाचारवती प्रवृत्तिर्न कलौ नृणाम्*।

न साम-यजुरृग्वर्ग-विनिष्पादन-हेतुका"†।

इति। आदित्य-पुराणेऽपि—

"यस्तु कार्त्त-युगे धर्म्मो न कर्त्तव्यः कलौ युगे।

पाप-प्रसक्तास्तु यतः कलौ नार्य्यो नरास्तथा"।

इति। अतः कलौ प्राणिनां प्रयास-साध्ये धर्मे प्रवृत्त्यसम्भवात् सुकरोधर्मोऽत्र बुभुत्सितः। स च द्विविधः चतुर्णां वर्णानां साधारणोऽसाधारणश्च। तत्र, साधारणो बृहस्पतिना निरूपितः,—

"दया क्षमाऽनसूया च शौचानायास-मङ्गलम्(१)।

अकार्पण्यास्पृहत्वे च सर्व-साधारणा इमे"‡।

इति। तथा विष्णुनाऽपि,—

"क्षमा सत्यं दमः शौचं दानमिन्द्रिय-संयमः।

अहिंसा गुरु-शुश्रूषा तीर्थानुसरणं दया।

---

* युगे,—इति स० से० पुस्तकयोः पाठः।

† न सामऋग्यजुर्व्वर्गविनिष्पादनहेतुकी,—इति स०से० पुस्तकयोः पाठः।

‡ सर्व्वसाधारणोविधिः,—इति स० से० पुस्तकयोः पाठः।

---

(१) दयादिलक्षणानि बृहस्पतिनैव दर्शितानि। परन्तु प्रसिद्धत्वादनुपेक्ष्य केवलमनायास—मङ्गलयोर्लक्षणमुच्यते। "शरीरं पीड्यते येन शुभेनापि कर्म्मणा। अत्यन्तं तन्न कुर्व्वीत अनायासः स उच्यते। प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनं। एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः"—इति।

आत्म-यत्नमलोभत्वं*(१) देवतानाञ्च पूजनम्† ।

अनभ्यसूया च तथा धर्मः सामान्य उच्यते" ।

असाधारणोऽपि बृहस्पतिना स्मर्य्यते‡—

"स्वाध्यायोऽध्यापनञ्चापि यजनं याजनं तथा ।

दानं प्रतिग्रहश्चापि षट् कर्म्माण्यग्रजन्मनः ।

इज्याऽध्ययन-दाने च प्रजानां परिपालनम् ।

शस्त्रास्त्र§धारणं(२) चैव कर्म्माणि क्षत्रियस्य तु ।

स्वाध्यायो यजनं दानं पशूनां पालनं तथा ।

कुसीद-कृषि-वाणिज्यं(३) वैश्य-कर्म्माणि सप्त वै ।

शौचं ब्राह्मण-शुश्रूषा सत्यमक्रोधएव च ।

शूद्र-कर्म्म तथा मन्त्रोऽनमस्कारोऽस्य चोदितः" ।

इति । गीतास्वपि भगवानाह,—

"ब्राह्मण-क्षत्रिय-विशां शूद्राणाञ्च परन्तप! ।

कर्म्माणि प्रविभक्तानि स्वभाव-प्रभवैर्गुणैः ।

---

* आत्मयत्नमलोभत्वं—इति स० सो० पुस्तकयोः। आर्ज्जवत्वमलोभश्च,—इति मु० वि० स० पाठः ।

† देवताब्राह्मणपूजनम्,—इति मु० वि० स० पाठः ।

‡ असाधारणश्च बृहस्पतिना स्मर्य्यते,—इति मु० पुस्तके पाठः ।

§ शस्त्रास्त्र,—इति मु० पुस्तके पाठः ।

---

(१) आत्मयत्नमात्मरक्षणम् ।

(२) येन गृहीतेन परो हन्यते, तत् शस्त्रम् । येन च मुक्तेन, तदस्त्रम् ।

(३) कुसीदं वृद्धिजीविका ।

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म* स्वभावजम्।
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्।
कृषि-गो-रक्ष-वाणिज्यं वैश्यं कर्म† स्वभावजम्।
परिचर्य्यात्मकं कर्म शूद्रस्यापि स्वभावजम्"।

इति। एवं द्वैविध्ये सति साधारणोऽस्मिन् श्लोके‡ पृच्छ्यते। 'किञ्चित्' —इति क्रिया-विशेषणम्। तथा सति, किमः स्तोकवाचित्वात् संक्षेपेणेत्यर्थः सम्पद्यते।(१) युक्तञ्चैतत्, असाधारण-धर्म-प्रश्ने "विस्तरात्" इति वक्ष्यमाणत्वात्(२) इति॥

अथ, असाधारणं धर्मं पृच्छति,—

**चतुर्णामपि वर्णानां कर्त्तव्यं धर्म्म-कोविदैः॥ १७॥**
**ब्रूहि धर्म्म-स्वरूप-ज्ञ! सूक्ष्मं स्थूलञ्च विस्तरात्§।**

इति। धर्म-स्वरूपे वादि-विप्रतिपत्तेः तदीय-विवेकस्य दुःशक-

---

* ब्रह्मकर्म्म,—इति स० सो० पुस्तकयोः, इ० गीतासु च पाठः।
† वैश्यकर्म्म,—इति स० सो० पुस्तकयोः, इ० गीतासु च पाठः।
‡ श्लोकौ,—इति मु० पुस्तके पाठः।
§ श्लोकोऽयं मु० मू० पुस्तके नास्ति।

---

(१) अत्र श्लोके साधारणधर्म्मप्रश्न इत्येवमुपपादयन्ति युक्तञ्चैतदिति।
(२) तथा च, साधारणधर्म्मस्य संक्षेपेण कथनं असाधारणस्य तु विस्तरेण,—इति प्रश्नाशयः।

त्वात् च* तत्र प्राचीनैः विवक्षिता 'धर्म-स्वरूप-ज्ञा' इति कथ्यते।
(१)तार्किकास्तावत् आत्म-गुणौ धर्माधर्मौ,—इत्याहुः।

"विहित-क्रियया साध्यो धर्मः पुंसो गुणो मतः† ।
प्रतिषिद्ध-क्रिया-साध्यः स गुणोऽधर्म उच्यते‡" ।

इति। मीमांसकास्तु, "चोदना-लक्षणोऽर्थो धर्मः" (मी० १अ० १ पा० २सू०) इत्यसूत्रयन्। तत्र, भाट्टा मन्यन्ते,—

"द्रव्य-क्रिया-गुणादीनां धर्मत्वं स्थापयिष्यते ।
तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ।
श्रेयः-साधनता ह्येषां नित्यं वेदात् प्रतीयते ।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रिय-गोचरः" ।

इति। प्राभाकरास्तु, कार्य-नियोगापूर्व-शब्दैरुच्यमानं धात्वर्थ-साध्यं स्वर्गादि-फल-साधनमात्म-गुणं धर्ममाहुः। (२)दुर्विवेचत्वञ्च§ महाभारते युधिष्ठिरेणोक्तम्||—

"धर्मोऽधर्म इति च व्यवसायो न शक्यते ।
कर्त्तुमस्मद्विधैर्ब्रह्मन्! ततो न¶ व्यवसाम्यहम्" ।

---

* दुःखज्ञत्वात्,—इति स० सो० पुस्तकयोः पाठः।
† पुंसोधर्म्मोगुणोमतः,—इति मु० पुस्तके पाठः।
‡ पुंगुणोऽधर्म्मउच्यते,—इति मु० पुस्तके पाठः।
§ दुर्व्विवेचत्वञ्च,—इति स० सो० पुस्तकयोः पाठः।
|| अत्र, मोक्षपर्व्वणि,—इत्यधिकं स० सो० पुस्तकयोः।
¶ ततोन,—इति मु० पुस्तके पाठः।

---

(१) धर्म्मे वादिविप्रतिपत्तिं दर्शयति तार्किका इति।
(२) धर्म्मविवेकस्य दुःखज्ञत्वमाह दुर्व्विवेचत्वञ्चेति।

इति । ईदृशस्यापि धर्म्मस्य स्वरूपमव्याकुलोऽजानातीत्यपि तच मार्गीतम् । धर्म्म-स्वरूपस्य विश्वामित्रआह,—

"यमार्य्याः क्रियमाणन्तु शंसन्त्यागमवेदिनः* ।
स धर्म्मो यं विगर्हन्तो† तमधर्म्मं प्रचक्षते‡ ।
ईदृशस्य हि धर्म्मस्य स्वरूपं व्याकुलेन तु ।
आजानातीत्यपि तथापि मार्गीतं धर्म्म-शालिनाम्"§ ।

इति । मनुरपि,—

"विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेष-रागिभिः ।
हृदयेनाभ्यनुज्ञातोयोधर्म्मस्तं निबोधत"(१) ।

इति । नन्वेवं धर्म्म-स्वरूपमनिरूपितमेव स्यात्|| तथाहि, विश्वामित्र-मनु-वाक्याभ्यां तावत् सामान्याकारः प्रतीयते, नतु द्रव्य-गुणादि-

---

* शंसन्त्यागमवेदिभिः,—इति लिपितत्त्वे पाठः । "आगमवेदिभिः क्रियमाणमिति संबन्धः,"—इति व्याख्यातञ्च मतं ।

† विगर्हन्ति,—इति लिपितत्त्वे पाठः ।

‡ एतदनन्तरं 'इति'शब्दोमुद्रितपुस्तके प्रामादिक इति मन्यते । उत्तर-श्लोकस्यापि विश्वामित्रीयत्वं वक्तव्यं अन्यथा असङ्गतेः । विश्वामित्र-वाक्ययोर्मध्ये च 'इति'शब्दो न सङ्गच्छते ।

§ श्लोकोऽयं स० सो० पुस्तकयोर्नास्ति ।

|| धर्म्मोऽनिरूपितएव स्यात्,—इति मु० पुस्तके पाठः ।

---

(१) विद्वद्भिरित्यस्य वेदविद्भिरित्यर्थः । वेदविद्भिः सेवितः,—इत्यनेन वेद-प्रमाणकत्वमुक्तं । हृदयेनाभ्यनुज्ञातइत्यनेन श्रेयःसाधनत्वमुक्तं । तत्र हि हृदयमभिमुखीभवति । तथा च, वेदप्रमाणकः श्रेयःसाधनोधर्म्म इत्युक्तं भवति ।

रूपो विशेषाकारः, वादिनाञ्च विप्रतिपत्तयः,—इति भवतैवोक्तम्। एतदेवाभिप्रेत्य महाभारते राज-धर्म्मे स्मर्य्यते,—

"न कल्याणेन कपिलेन कृष्णेन च लोहितः।
अणीयान् क्षुर-धारायाः, कोधर्म्मं वक्तुमर्हति"।

इति। नैष दोषः। उक्त-वाक्ययोरधर्म्म-व्यावृत्ताकार-विशेषस्य स्फुटं प्रतीयमानत्वात्। वादि-विप्रतिपत्तेश्च समाधातुं शक्यत्वात्। स्वर्गादि-साधनस्य शास्त्रैकसमधिगम्यस्यातिशयस्य धर्म्मत्वेन सर्व्व-सम्प्रतिपत्तेः। स चातिशयो द्विविधः द्रव्यादि-निष्ठः, आत्म-निष्ठश्च। तत्रात्म-निष्ठस्यातिशयस्य साक्षात् फल-साधनत्वात्, फल-निष्पत्ति-पर्य्यन्तं चिर-कालमुपस्थानाच्च तद्विवक्षया आत्मगुणोऽपूर्व्व-शब्द-वाच्योधर्म्मः,—इति तार्किक-प्रभाकरावाहतुः। उक्तस्यापूर्व्वस्य फलोत्पत्ति-क्षम-त्वमभिप्रेत्य तत्-साधनभूतोद्रव्याद्यतिशयो धर्म्मः,—इत्याहुर्भाट्टाः। ब्रह्मवादिनामप्येतदविरुद्धम्, "व्यवहारे भट्ट-नयः" (१)इत्यभ्युपगमात्। एवं धर्म्म-स्वरूपे निरूपिते सति, यथाक्रमेण तदभिधानं सम्भवति*।

चतुर्णां वर्णानां मध्ये धर्म्म-कोविदैराचारक-धर्म्माभिज्ञैः कर्त्तव्यं विस्तराद्ब्रूहि। स च कर्त्तव्योधर्म्मो द्विविधः,—स्थूलः सूक्ष्मश्च। सूक्ष्म-

* भवति,—इति स॰ पुस्तके पाठः।

(१) यद्यपि अद्वैतवादिनां मायैव सर्व्वातिरिक्तं किञ्चित्, तथापि तेषां मतेऽपि परमार्थदशायामेव तथात्वं। व्यवहारदशायान्तु भाट्टमतं तैरनुश्रियते,—इति भावः।

मतिभिरपि सुखेन बुध्यमानः शौचाचमन-सन्ध्या-वन्दनादिः स्थूल-धर्मः। शास्त्र-पारङ्गतैः पण्डितैरेव बोद्धुं योग्यः; इतरेषामधर्मत्व-भ्रान्ति-विषयो द्रौपदी-विवाहादिः सूक्ष्मोधर्मः। तथा च महाभारते,— द्रुपदः एकस्याः योषितो* बहु-पतित्वं लोक-वेद-विरुद्धं मन्यमानः पर्यधिचिक्षेप(१)। तत्र, लोक-विरोधः स्फुटएव तिर्य्यक्ष्वपि, एकस्यां गवि वृषभ-द्वय-युद्ध-दर्शनात्। वेदेऽप्येवं श्रूयते। "एकस्य बह्वो जायाभवन्ति; नैकस्यावहवः सह‡ पतयः"—इति। "यदेकस्मिन् यूपे द्वे रशने परिव्ययति, तस्मादेकोद्वे जाये विन्दते, यन्नैकां§ रशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्दते"—इति च। तत्र, द्रुपद-भ्रान्ति-निवृत्तये युधिष्ठिरआह,—

"लोक-वेद-विरुद्धोऽयं धर्मोधर्मभृतां वर !‖।
सूक्ष्मोधर्म्मोमहाराज ! नास्य विद्मो गतिं वयम्"।

इति। धर्मस्य बहु-पतित्वस्य तत्त्वं बहुधा प्रपञ्चितम्। एवं धर्म-व्याधोपाख्याने,—विद्याऽभ्यासादूनरीयसी मातापितृ-शुश्रूषा, विना-ऽप्यभ्यासं तच्छुश्रूषयैव तस्य ज्ञानोत्पत्तेः,—इति प्रतिपाद्य सूक्ष्मत्वं धर्मस्य निरूपितम्,—

---

* कन्यायाः,—इति स० वे० पुस्तकयोः पाठः।
† [illegible],—इति मु० पुस्तके पाठः।
‡ सह,—इति स० वे० पुस्तकयोर्नास्ति।
§ यत्रैकां,—इति स० वे० पुस्तकयोः पाठः।
‖ धर्म्मवतां वर,—इति मु० पुस्तके पाठः।

---

(१) [illegible]।

"बहुधा दृश्यते धर्मः सूक्ष्मएव द्विजोत्तम !"

इति । इत्थं स्थूल-सूक्ष्मयोः सद्भावात् युक्तस्तदुभय-विषयः प्रश्नः ॥

उक्त-प्रश्नस्य वक्ष्यमाणोत्तरस्य च मध्यावर्त्तियोत्तरमवतारयति,—

**व्यास-वाक्यावसाने तु मुनि-मुख्यः पराशरः ॥ १८ ॥**
**धर्मस्य निर्णयं प्राह सूक्ष्मं स्थूलञ्च विस्तरात् ।**

इति । 'मुनि-मुख्य'—इति विशेषणेन सूक्ष्म-निर्णय-कौशलं दर्शितम् । ननु, "कस्यायं श्लोकः ?, न तावत् व्यासस्य, प्रश्न-रूपताभावात्, नापि पराशरस्य, उत्तर-रूपतायाः अभावात् । 'ननु, अत्यल्पमिदमुच्यते, आद्य-श्लोकेऽपि समानमिदं चोद्यम्' । एवन्तर्हि ईदृशेषु सर्व्वेषु परिहारोऽन्वेष्टव्यः" । उच्यते,—पराशरएव भावि-शिष्य-बुद्धि-समाधानाय स्वकीय-वृत्तान्त-ज्ञापकान् ईदृश-श्लोकान् निर्ममे,—इति द्रष्टव्यम् । भारतादौ व्यास-वृत्तान्त-श्लोकानां व्यासेनैव निर्म्मितत्वेन सर्व्व-संप्रतिपत्तेः(१) ॥

वक्ष्यमाण-धर्म्म-रहस्य-प्रचाराय आश्रमस्तवं विधत्ते,—

---

(१) 'आचार्य्यवाचामियं शैली,—यत् स्वाभिप्रायमपि परोपदेशमिव वर्णयन्ति'—इति न्यायोऽत्र स्मर्त्तव्यः । अनयैव रीत्या,—"कर्म्माण्यपि जैमिनिः फलार्थत्वात्" (मी० ३ अ० १ पा० ४ सू०) इति जैमिनेः, "तदुपर्य्यपि बादरायणः सम्भवात्" (ब्र० १ अ० ३ पा० २६ सू०) इति बादरायणस्य च सूत्रमुपपद्यते । यदि तु, पराशरोक्तश्लोकः केनचित् तच्छिष्येण पश्चादुपनिबद्धः,—इति समाधीयते, तदा न काचित् क्षतिः । पराशरोक्तधर्म्मप्रतिपादकतया तु ग्रन्थस्यास्य पराशरीयत्वस्याप्युपपत्तेरिति ध्येयम् ।

**शृणु पुत्र! प्रवक्ष्यामि शृण्वन्तु मुनयस्तथा ॥ १९ ॥**

इति। तत्र, मुनि-सम्बोधनेनैव पुत्रस्य सम्बोधने सिद्धेऽपि सम्प्रदाय-प्रवर्त्तकत्वेन विशेषतस्तत्-सम्बोधनम्॥

धर्म्म-मनुष्ठातिविधाय धर्म्मस्य प्रवाह-रूपेण अनादितां वक्तुं श्रुति-शास्त्रस्य कर्त्तॄणां च सृष्टि-संहारौ संक्षिप्याह,—

**कल्पे कल्पे क्षयोत्पत्तौ* ब्रह्म-विष्णु-महेश्वराः।**
**श्रुति-स्मृति-सदाचार-निर्णेतारश्च सर्व्वदा† ॥ २० ॥**

इति। कल्प्यते जगदस्मिन् काले,—इति सृष्ट्यादिमारभ्य प्रलयोपक्रम-पर्य्यन्तोऽनवच्छिन्नः‡ कालः कल्पः। स च द्विविधः,—महाकल्पोऽवान्तर-कल्पश्च। (१)मूल-प्रकृतेर्यः सर्गः, तमारभ्य चतुर्मुखायुः-परिमितो महाकल्पः, चतुर्मुखस्य दिनमात्रमवान्तर-कल्पः। तदुक्तं कूर्म्मपुराणे,—

---

* क्षयोत्पत्त्या,—इति मु० पुस्तके, क्षये इत्ये,— इति सो० मू० पुस्तके पाठः।

† सर्व्वशः'—इति मु० पुस्तके पाठः। चतुर्थचरणे, 'न व्ययन्ते सदातन' इति सो० मू० पुस्तके पाठः। 'श्रुतिः स्मृतिः सदाचारो निर्णेतारश्च सर्व्वदा,—इति मु० मू० पुस्तके उत्तरार्द्धपाठः।

‡ जगदवच्छिन्नः,—इति स० सो० पुस्तकयोः पाठः।

---

(१) मूलप्रकृतिः समस्तजगदुपादानं कारणमव्यक्तम्। तच्च साम्यावस्थोपलक्षितं सत्त्वादिगुणत्रयम्। सत्त्व-रजस्तमसाञ्च जगदुपादानतया प्रकृतित्वं बोध्यम्। तेषु गुणत्रयपदेशः पुरुषोपकरणत्वादिना भाक्तः, इत्थं सर्व्वं सांख्यदर्शने व्यक्तम्।

"ब्राह्ममेकमहः कल्पस्तावती रात्रिरुच्यते।
चतुर्युग-सहस्रन्तु कल्पमाहुर्मनीषिणः"।

इति। सोऽयमवान्तरः कल्पः। महाकल्पस्तु ब्राह्मेण मानेन(१) शत-संवत्सर-परिमितः,—इति पुराणादिषु प्रसिद्धम्। 'कल्पे कल्पे',—इति वीप्सया द्विविधानामपि कल्पानामसंख्यत्वं विवक्षितम्। तथा च लिङ्ग-पुराणे,—

"एवं कल्पास्तु संख्याताः* ब्रह्मणोऽव्यक्त-जन्मनः।
कोटि-कोटि-सहस्राणि कल्पानां मुनि-सत्तमाः!"।

इति। तत्र, द्वयोर्द्वयोः कल्पयोर्मध्ये लयोभवति। स च चतुर्विधः;—नित्योनैमित्तिकः प्राकृतिकश्चात्यन्तिकश्चेति। तदुक्तं कूर्म-पुराणे,—

"नित्योनैमित्तिकश्चैव प्राकृतात्यन्तिकौ तथा।
चतुर्धाऽयं पुराणेषु प्रोच्यते प्रतिसञ्चरः(२)।
योऽयं संदृश्यते नित्यं लोके भूत-क्षयस्त्विह।
नित्यः संकीर्त्यते† नाम्ना मुनिभिः प्रतिसञ्चरः।
ब्राह्मोनैमित्तिकोनाम कल्पान्ते योभविष्यति।

---

* एवं कल्पास्त्वसंख्याताः,—इति पाठो भवितुं युक्तः।
† अत्र, नित्यः स कीर्त्यते,—इति पाठोभवितुं युक्तः।

---

(१) ब्राह्मोमानञ्च,—"दैविकानां युगानान्तु सहस्रं परिसंख्यया। ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरेव च"—इति मन्वाद्युक्तम्।
(२) प्रतिसञ्चरः प्रलयः।

(१)महदादि-विशेषान्तं यदा संयाति संक्षयम्।
प्राकृतः प्रतिसर्गोऽयं प्रोच्यते काल-चिन्तकैः।
ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि"(२)।

इति। तत्र, प्राकृतः प्रलयः स्कन्द-पुराणे सूत-संहितायामेवं निरूपितः,—

"निमेषैः षष्टिभिः कल्पैर्ब्रह्मणो वर्षमीरितम्।
वर्षाणां यत् शतं तस्य तत्परार्द्धमिहोच्यते।
ब्रह्मणोऽन्ते मुनि-श्रेष्ठाः! मायायां लीयते जगत्।
तथा विष्णुश्च रुद्रश्च प्रकृतौ विलयं गतौ।

---

(१) प्राकृतप्रलयमाह महदादीति। महदादिविशेषान्तमिति महदहङ्कारपञ्चतन्मात्रैकादशेन्द्रियपञ्चमहाभूतानीत्यर्थः। तत्र महत्तत्त्वं प्रकृतेः प्रथमः परिणामः, तत् बुद्धितत्त्वमित्यप्युच्यते। तत्रैकादशेन्द्रियाणि पञ्चमहाभूतानि च,—इति षोडशकोऽयं विशेषइत्युच्यते। अहङ्कारः पञ्चतन्मात्राणि च इति षड्विशेषाः। यथाऽहङ्कारस्याऽविशेषस्य विशेषा एकादशेन्द्रियाणि, तन्मात्रपञ्चकानामविशेषाणां विशेषाः पञ्चमहाभूतानीतिविवेकः। महत्तत्त्वन्तु न विशेषो नाप्यविशेषः किन्तु लिङ्गमात्रमित्याख्यायते। प्रकृतिस्त्वलिङ्गमित्युच्यते। एतत् सर्वं पातञ्जले सांख्ये च व्यक्तम्। अत्र महदादीनां सर्वेषां प्रकृतौ लयात् प्राकृतोऽयं प्रलयः। प्रतिसर्गः प्रलयः।

(२) ज्ञानात् तत्त्वपुरुषान्यता-साक्षात्कारात् योगिनोयः परमात्मनि लयः सोऽयमात्यन्तिकः। न तस्य पुनरावृत्तिरस्ति, "न स पुनरावर्त्तते"— इति श्रुतेः। प्रकृतिलीनस्य त्वस्ति पुनरावृत्तिः ऋते विवेकख्यातेरिति सांख्ये पातञ्जले च व्यक्तम्। तस्मात् प्रकृतिलयस्य नात्यन्तिकप्रलयत्वमिति बोध्यम्।

ब्रह्मणश्च तथा विष्णोस्तथा रुद्रस्य सुव्रताः! * ।
मूर्त्तयो विविधास्तेषु कारणेषु लयं ययुः ।
माया च प्रलये काले परस्मिन् परमेश्वरे ।
सत्य-बोध-सुखानन्दे ब्रह्म-रुद्रादि-संज्ञिते” ।

इति । तथा कूर्म्मे ब्रह्म-विष्ण्वादि-लयानन्तरं† पञ्च-भूतादि-लयः‡ पठ्यते,—

(१)संस्थितेष्वथ देवेषु ब्रह्म-विष्णु-पिनाकिषु ।
गुणैरशेषैः पृथिवी विलयं याति वारिषु ।
तदापस्तत्त्वं सगुणं ग्रसते हव्य-वाहनः ।
तेजस्तु गुण-संयुक्तं वायौ संयाति संक्षयम् ।
आकाशे सगुणोवायुः प्रलयं याति विश्व-भृत् ।
भूतादौ च तथाऽऽकाशोलीयते गुण-संयुतः ।
इन्द्रियाणि तु सर्व्वाणि तैजसे यान्ति संक्षयम् ।
वैकारिकस्तैजसश्च भूतादिश्चेति सत्तमाः! ।
त्रिविधोऽयमहङ्कारोमहति प्रलयं व्रजेत् ।
महान्तमेभिः सहितं प्रकृतिर्ग्रसते द्विजाः!” ।

---

* सुव्रत! इति मु॰ पुस्तके पाठः ।
† प्रलयानन्तरं,—इति स॰ सो॰ पुस्तकयोः पाठः ।
‡ पञ्चभूतादिप्रलयः,—इति स॰ सो॰ पुस्तकयोः पाठः ।

---

(१) संज्ञा मरणं प्रलय इति यावत् ।

इति। एवं विष्णु-पुराणादिषु प्राकृत-प्रलयोऽनुसन्धेयः*। एतमेव प्रलयमभिप्रेत्य† भगवान् बादरायणः सूत्रयामास;—"विपर्य्ययेण तु क्रमोऽतउपपद्यते च" (ब्र०२अ०३पा०१४सू०) इति। अतोऽस्मात् सृष्टि-क्रमात् विपर्य्ययेण प्रलय-क्रमोऽभ्युपगन्तव्यः। सृष्टि-क्रमस्य तत्त्वेषु पूर्व्व-सूत्रेषु विचारितत्वात् 'अतः'शब्देन परामर्शः। उपपद्यते ह्ययं विपरीत-क्रमः, उपादान-कारण-भूतायां मृत्तिकायां कार्य्यस्य घटस्य विलीयमानत्वात्। यदि सृष्टि-क्रमएव प्रलयेऽप्याद्रियेत तर्ह्यवस्थिते घटे मृद्विनाशः प्राप्नुयात्। न ह्येवं क्वचित् दृष्टम्। तस्मादुपपन्नोविपरीत-क्रमः। तथा सति, सृष्टौ परमात्मा-देरण्डदेशान्तस्य‡ क्रमस्य वक्ष्यमाणत्वात् प्रलये तद्विपर्य्ययेण अण्डदे-शादिः परमात्मान्तः क्रमोयुक्तः। प्राकृत-प्रलये प्रकृत्यन्तःक्रमोऽवगन्तव्यः, —इति चेत्। बाढम्। उच्यते एवासौ,(१) परमात्मनः प्रकृति-त्वात्। तथा च, बह्वृचोपनिषदि परमात्मनोऽव्यक्त-प्रकृतित्वं श्रूयते,— "आत्मा वा इदमेकएवाग्रआसीन्नान्यत् किञ्चनमिषत्, स ईक्षत; लोकान्नु सृजा इति, स इमान् लोकानसृजत"—इति।

---

* प्राकृतश्चेयोऽवगन्तव्यः,—इति मु० पुस्तके पाठः।
† प्रलयस्याभिप्रेत्य,—इति मु० पुस्तके पाठः।
‡ परमात्मादेरेतद्देशान्तस्य,—इति मु० पुस्तके पाठः।

---

(१) असौ प्रकृत्यन्तःक्रमः उच्यतएवास्माभिरित्यर्थः। ननु परमात्मान्तः-क्रमस्य पूर्व्वमुक्तः न प्रकृत्यन्तःक्रमः इत्यत आह परमात्मनइति। तथा च परमात्मनः प्रकृतित्वात् परमात्मान्तःक्रमस्य प्रकृत्यन्तः क्रमत्वमिति भावः।

ननु, 'श्वेताश्वतरोपनिषदि मायायाः(१) प्रकृतित्वं परमात्मनस्तन्नियन्तृत्वं श्रूयते,—

"मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्"।

इति'। नायं दोषः। मायायाः परमात्म-शक्तित्वेन शक्तिमतोऽप्यात्मनः प्रकृतित्वावश्यम्भावात्। दहन-शक्ति-युक्ते वह्नौ दाहकत्व* व्यवहार-दर्शनात्। आत्म-शक्तित्वञ्च मायायास्तस्यामेवोपनिषदि श्रुतम्,—

"ते ध्यान-योगानुगता अपश्यन्
देवात्म-शक्तिं स्व-गुणैर्निगूढाम्"।

इति। बादरायणस्य प्रथमाध्यायस्योपान्त्याधिकरणे(२) माया-विशिष्टस्य ब्रह्मणः प्रकृतित्वं निमित्तञ्च,—इत्युभयविध-कारणत्वमुपपादयामास। कुलालवत् चेतनत्वात् निमित्तत्वं, घटे मृदिव कार्य्ये† तस्यानुगमात्

---

* दाहकत्व,—इति मु० पुस्तके पाठः।
† कार्य्ये,—इति स० चा० पुस्तकयोः पाठः।

---

(१) माया तु त्रिगुणात्मिका सदसद्भ्यामनिर्वाच्या विशुद्ध-सत्त्व-प्रधाना भावरूपा। यथोक्तम्। "चिदानन्दमय-ब्रह्म-प्रतिबिम्ब-समन्विता। तमोरजः-सत्त्व-गुणा प्रकृतिर्द्विविधा च सा। सत्त्व-शुद्ध्यविशुद्धिभ्यां मायाऽविद्ये च ते मते"—इति।

(२) "प्रकृतिश्च प्रतिज्ञा-दृष्टान्तानुपरोधात्" (शा० १अ० ४पा० २३ सू०) इत्यस्मिन् अधिकरणे। प्रकृतिश्च उपादानकारणञ्च ब्रह्माभ्युपगन्तव्यं, निमित्त-कारणञ्च। एक-विज्ञानेन सर्व्व-विज्ञान-प्रतिज्ञायाः मृत्पिण्डादि-दृष्टान्तस्य च अनुपरोधोपपत्तेरिति सूत्रार्थः। कारणे हि विज्ञाते कार्य्यं विज्ञातं भवति कारणातिरिक्तस्य वस्तुनः कार्य्यस्याभावात्। विवर्त्त-वादाभ्युपगमेन कार्य्यस्य कारणानतिरेकात्। एतच्च तत्रैव द्रष्टव्यम्।

ब्रह्म"—इत्युपक्रम्य, "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः"—इत्यादिकं तैत्तिरीयक-वाक्यम्। "सदेव सोम्येदमग्र आसीत्"—इत्युपक्रम्य, "तदैक्षत; बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत"—इति छान्दोग-वाक्यम्।

"यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः
सहस्रशः प्रभवन्ते सरूपाः।
तथाऽक्षराद्विविधाः सोम्य! भावाः*
प्रजायन्ते तत्र चैवापि यन्ति"॥

इत्याथर्वण†वाक्यम्। "तद्धेदं‡ तर्ह्यव्याकृतमासीत् तन्नाम-रूपाभ्यामेव व्याक्रियत"—वाजसनेय-वाक्यम्। ननु, नैतेषु वाक्येषु सृष्टिर्व्यवस्थापयितुं शक्यते, विप्रतिपन्नार्थत्वात्। यतः, ब्रह्म-सद्-अक्षरा-ऽव्याकृत-शब्दैर्वाच्यानि वस्तूनि कारणतया श्रूयन्ते। न च, एकस्य जगतो विलक्षणानि बहून्युपादानानि युक्तानि§। नैष दोषः। आत्मादि-शब्दैरेकस्यैव वस्तुनोऽभिधीयमानत्वात्। आत्म-ब्रह्म-शब्दयोस्तावदेकार्थं स्पष्टम्। तत्र वाक्यशेषे "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः"—इत्युक्तत्वात्। सद्-आत्म-शब्दयोरैकार्थ्यम् युक्तम्। आत्म-शब्दस्य स्वरूप-वाचित्वात्, सत्ताया औपनिषदैः सर्व-स्वरूपत्वाभ्युपगमात्, अनुभूयते च सत्तायाः सर्व-स्वरूपत्वं, घट-विषयादीनामपि

---

* यथाऽक्षरात् प्रभवन्ते हि भावाः—इति मु० पुस्तके पाठः।

† अत्र 'वेद' इत्यधिकं वर्त्तते स० सो० पुस्तकयोः।

‡ तदेवं—इति मु० पुस्तके पाठः।

§ युक्तानि,—इति मु० पुस्तके नास्ति।

सृज्यायत*"—इति सूत्रस्य कारणता-प्रतिषेधात् । ननु† प्रतीय-मान-जगदाकार-रहितं शून्यादपि विलक्षणं चेत् ब्रह्म, तर्हि, तत् कीदृशं बुद्धावारोपयितव्यम्‡ इति चेत् । इदानीं यादृशं यादृशमनू-दितं, तादृशमेव§ तदिति बुद्धिं समाधत्स्व(१) । दृष्टान्तं चेत् पृच्छसि, न वयं वक्तुं प्रभुमः । तत्-समस्य वस्त्वन्तरस्याभावात् । तथा च श्रुतिः,—

"न तस्य कार्यं करणञ्च विद्यते
न तत्-समश्चाभ्यधिकश्च दृश्यते" ।

इति । यदि, शिष्य-बुद्ध्युत्पादनाय दृष्टान्ताभावोऽपेक्षितः‖ (२), तर्हि, अद्वैताकारे सुषुप्तिर्निदर्शनम्, पुरुषार्थ-स्वरूपत्वे च¶ विषयानन्दो निदर्शनीयः । "आनन्दो ब्रह्मेति व्यजानात्"—इति** "विज्ञानमानन्दं ब्रह्म"—इत्यादि श्रुतेः । अशेष-ब्रह्म जिज्ञासा चेत्, ब्रह्म-मीमांसां पठ,—इत्यलमतिविस्तरेण ।

---

* सृज्यायेत,—इति स० पुस्तके पाठः ।
† ननु,—इति सु० पुस्तके नास्ति ।
‡ बुद्धावारोपयितव्यम्,—इति सु० पुस्तके पाठः ।
§ तादृशमन्यं—इति सु० पुस्तके पाठः ।
‖ दृष्टान्ताभावोऽपेक्षितः,—इति सु० पुस्तके पाठः ।
¶ 'च'—इति सु० पुस्तके नास्ति ।
** 'इति' शब्दः स० बो० पुस्तकयोर्नास्ति ।

---

(१) तथा च जगदाकाररहितं शून्यादपि विलक्षणं ब्रह्म,—इत्येव बुद्धा-वारोपयितव्यमित्यर्थः ।
(२) दृष्टान्तपदाभासते,—इति दृष्टान्ताभासः, न तु परमार्थदृष्टान्त इत्यर्थः ।

"अपाणि-पादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः" ।

इति च । एवञ्च सति, 'अशरीरस्य कथमुत्पादकत्वम्, तदुपकरणानि वा विविधादीनि योग्य-सामग्रीमन्तरेण कथमुत्पद्येरन्"— इत्यादीनि दोषान्वेषणवचनानि । अनन्त-शक्तेश्च अशेष-दोषाणां दूरोत्सारत्वात् । तस्मात्, यथाश्रुति निःशङ्कैः शक्तिरभ्युपेतव्या । श्रुतिश्चैवमाह,—"तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधिभ्योऽन्नम्, अन्नात् पुरुषः"—इति । तत्र, पुरुष-शब्देन शिरः-पाण्यादि-युक्तो देहोऽभिधीयते । स च देहो ब्रह्मादिः स्तम्बान्तोऽनेक-प्रकारः । तत्र, ब्रह्मदेहस्य निरतिशय-पुण्य-पुञ्ज-फल-रूपत्वात् इतर-सकल-देह-कारणत्वेनादिमत्त्वम् । तथाच श्रुति-स्मृती,—

"हिरण्य-गर्भः समवर्त्तताग्रे
भूतस्य जातः पतिरेक आसीत्" । इति श्रुतिः† ।
"ब्रह्मा देवानां प्रथमः संबभूव ।
विश्वस्य कर्त्ता भुवनस्य गोप्ता" ।

इति च ।

"स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदि-कर्त्ता स भूतानां ब्रह्माऽग्रे समवर्त्तत" ।

---

*श्रुतिः,—इति क० पुस्तके पाठः ।
† श्रुतिः,—इति ख० पुस्तके नास्ति ।

श्रुत्यादीनां निर्मातारः पयोत्पत्तिभ्यामुपलक्ष्यन्ते। तत्र, श्रुति-निर्मातारः,—वेद-विभाग-कारी व्यासः, तद्वेद-शाखा-सम्प्रदाय-प्रवर्त्तकाः कठ-कौथुमादयः, कल्प-सूत्र-काराः बौधायनाश्वलायनापस्तम्बादयः, मीमांसा-सूत्र-कृतो जैमिन्यादयश्च। स्मृति-निर्मातारो मन्वादयः प्रसिद्धाः। तत्र, पैठीनसिः,—

"तेषां मन्वङ्गिरोव्यास-गौतमात्र्युशनो-यमाः।
वशिष्ठ* दक्ष-संवर्त्त-शातातप-पराशराः।
विष्णापस्तम्ब-हारीताः शङ्खः कात्यायनो भृगुः।
प्रचेता नारदो योगि(१) बौधायन-पितामहाः।
सुमन्तुः कश्यपो बभ्रुः पैठीनो व्याघ्र एव च†।
सत्य-व्रतो भरद्वाजो गार्ग्यः कार्ष्णाजिनिस्तथा‡।
जाबालिर्जमदग्निश्च लोकाक्षि§ ब्रह्म-सम्भवः।
इति धर्म्म-प्रणेतारः षट्त्रिंशदृषयस्तथा"।

ननु, किमियं परिसंख्या?(२)। नैवम्। तथा सति, वत्स-मरीचि-

* वसिष्ठ,—इति मु० पुस्तके पाठः।
† व्यासएव च,—इति स० शो० पुस्तकयोः पाठः।
‡ कार्ष्णाजिनकस्तथा,— इति मु० पुस्तके पाठः।
§ लोगाक्षि,—इति स० शो० पुस्तकयोः पाठः।

(१) योगी याज्ञवल्क्यः। अयञ्च, क्वचित् योगीश्वरः—इति, क्वचित् याज्ञवल्क्यः—इति, क्वचिच्च योगियाज्ञवल्क्यः,—इति च निर्दिश्यते। याज्ञवल्क्यीयात् धर्म्मशास्त्रात् पृथक् योगियाज्ञवल्क्यीयं धर्म्मशास्त्रमप्यस्माभिरुपलब्धम्।

(२) परिसंख्या परितः संख्यानम्। एतावन्त एव धर्म्मप्रणेतारो नान्ये इत्येवं किमेषा गणना इति प्रश्नार्थः। तथा चोक्तम्। "अन्यार्थमुप-

देवल-पारस्कर-पुलस्त्य* पुलह-क्रतु† ऋष्यशृङ्ग-शङ्ख-लिखित‡ छागले-यात्रेयादीनां धर्म-शास्त्र-प्रणेतृत्वं न स्यात्। आश्वमेधिके पर्व्वण्यपि तत्तन्मुनि-प्रोक्त-धर्मानुक्रमणात् धर्मशास्त्र-कर्तृत्वारोपो गम्यते(१)। 'श्रुता मे मानवा धर्म्माः'—इत्युपक्रम्य एवं पठ्यते,—

"सौमा-महेश्वराश्चैव§ नन्दि-धर्म्माश्च पावनाः।
ब्रह्मणा कथिताश्चैव कौमाराश्च श्रुता मया।
धूम्रायण-कृताधर्म्माः काण्वा‖ वैश्वानरा अपि।
भार्गवा याज्ञवल्क्याश्च मार्कण्डेयाश्च कौशिकाः।
भरद्वाज-कृता ये च बृहस्पति-कृताश्च ये।
कुणेश्च कुणि-बाहोश्च¶ विश्वामित्र-कृताश्च ये।
सुमन्तु-जैमिनि-कृताः शाकुनेयास्तथैव च।
पुलस्त्य-पुलहोद्गीताः पावकीया** स्तथैव च।
अगस्त्य-गीता मौद्गल्याः शाण्डिल्याः सौलभायनाः††।

* पुलस्त्य—इति मु० पुस्तके नास्ति।
† क्रतु,—इति मु० पुस्तके नास्ति।
‡ लिखित,—इति मु० पुस्तके पाठः।
§ उमामहेश्वराश्चैव,—इति स० सो० पुस्तकयोः पाठः।
‖ काथा,—इति स० सो० पुस्तकयोः पाठः।
¶ कुशिताहेश्च,—इति स० सो० पुस्तकयोः पाठः।
** यावकीया,—इति मु० पुस्तके पाठः।
†† अगस्त्यगीताः सौधन्वाः शाण्डिल्याः यौगभाष्यनाः,—इति स० सो० पुस्तकयोः पाठः।

नाम च यन्यार्थप्रतिषेधिका। परिसंख्या तु सा ज्ञेया यथा प्रोक्षित-भोजनम्"—इति।

(१) पवृत्तादय इति शेषः।

वालखिल्य-कृताश्चैव ये च सप्तर्षिभिः कृताः ।
वैखानस-गीताश्च विभक्तक* कृताश्च ये ।
तथा विदुर-वाक्यानि भृगोरङ्गिरसस्तथा ।
वैशम्पायन-गीताश्च ये चान्ये एवमादयः" ।

इति । 'सदाचारः',—होलाकोद्वृषभ-यज्ञाह्नीनिबुकादिः† (1) । तच्च निर्दोषाचारत्वात्-मूल-द्रष्टाः । 'च'कारः उक्तानुक्त-समुच्चयार्थः । उक्ताः,—मन्वादयोऽङ्गिरादयश्च स्मृति-शास्त्रकर्त्तारः । अनुक्तास्तु,—धर्मः । तस्यापि, पूर्व-कल्पान्ते विलयोत्तर-कल्पादौ सृष्टिर्भवति । तथा च, वाजसनेय-ब्राह्मणे सृष्टि-प्रकरणे,‡ प्रजापतिर्मनुष्यादि-पिपीलिकान्त-प्राणिनां चतुर्वर्णाभिमानि-देवतानाञ्च सृष्टिमाम्नाय, तद्रूपमपि क्षत्रियादिकं नियन्तुं समर्थस्य धर्मस्य सृष्टिराम्नायते । "स नैव व्यभवत् तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत् क्षत्रस्य क्षत्रं यद्धर्मः तस्मात् परं नास्ति" इति । अस्यायमर्थः;—स प्रजापति-मन्वादि-रूप-धारी जगत्-स्रष्टा परमेश्वरः प्रजाः सृष्ट्वाऽपि तन्नियामकाभावात् उत्कृष्टता-रूपं विभवं नैव प्राप्तवान्, ततो विभवार्थं नियामकत्वेन श्रेष्ठं धर्ममतिशयेनासृजत,—इति । अहो ! महदिदं धर्मस्य सामर्थ्यं; यत् क्षत्रियादिरयोभारत्वे समर्थोऽपि धर्माधीनः§ कर-प्रदानाद्युप-

* विलक्षणा,—इति स० सो० पुस्तकयोः पाठः ।
† समाचारो होलाकाद्वृषभयज्ञादि नैमित्तादि,—इति मु० पुस्तके पाठः ।
‡ तत्र, प्रजापति-मनुष्यादि,—इति पाठो भवितुं युक्तः ।
§ धर्माधीनो —इति स० सो० पुस्तकयोः पाठः ।

(1) होलाका वसन्तोत्सवविशेषः प्राच्ये विषये, वृषभयज्ञः उदीच्ये, आह्नीनिबुकादयो दाक्षिणात्ये । स्पष्टमिदं मीमांसा-प्रथम-तृतीयाष्टमाधिकरणे भाष्यादौ ।

योगिनं बाधकं विषादिकं न मारयति*। अत्रत्र, तस्मै धनं ददाति, भटाश्चातिशूराः धनुः-खड्गादि-धारिणोऽसंख्य-सहायकाः एकेन† निरायुधेन दुर्बलेन‡ स्वामिना अधिक्षिप्यमाणाः§ ताड्यमानाः सन्तोऽपि स्वामि-द्रोहाद्बिभ्यति। ततो धर्मादप्युत्कृष्टं न किञ्चिद्विधायकमस्तीति। 'प्रलय-काले धर्मस्यापि संहारे भाविसृष्टेर्धर्माधर्म-कार्य्यत्वा-नुपपत्तिः',(१) इति चेत्, न, पूर्व्व-कल्पानुष्ठान-सञ्चितस्य फल-बीजस्या-पूर्व्वस्य संहारानङ्गीकारात्(२)। द्रव्य-गुण-क्रिया-रूपएव हि धर्मः संह्रियते पुनरुत्पद्यते च सर्व्वदा(३) इति। अनेन, सृष्टि-संहार-प्रवा-हस्यानादितामनन्ततां च दर्शयति(४)॥

---

* ताड़यति,—इति मु० पुस्तके पाठः।
† स्वकीयेनैकेन, – इति स० सो० पुस्तकयोः पाठः।
‡ दुर्बलेन, —इति मु० पुस्तके नास्ति।
§ विक्षिप्यमाणा,—इति मु० पुस्तके पाठः।

---

(१) धर्माधर्मौ विना अस्मद्वैचित्र्यासम्भवात् सृष्टेः धर्माधर्मकार्य्यत्वमिति बोध्यम्।

(२) तथा चापूर्व्वरूपौ धर्माधर्मौ प्रलयेऽपि तिष्ठतः,—इति न विचित्र-सृष्ट्यनुपपत्तिरिति भावः। तदानीं धर्माधर्मयोः सत्त्वञ्च कार्य्यदर्शना-दनुमातव्यम्।

(३) द्रव्यं सोमादि, गुणः "अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणा-ति"—इत्याद्युक्तः आरुण्यादिलक्षणः, क्रिया अभिषेकादिका। धर्म-त्वमामीषां न स्वरूपतः किन्तु श्रेयःसाधनतारूपेणेति मीमांसाश्लोक-वार्त्तिकादौ व्यक्तम्।

(४) यद्यपि प्रवाहस्यावस्तुत्वात् प्रवाहिव्यक्तीनाञ्च सादित्वात् प्रवाहस्या-नादित्वासम्भवः, तथापि, प्रवाहिव्यक्तीनां मध्ये अन्यतमया व्यक्त्या विना अनादिकालस्यानवस्थानमेव कार्य्यानादित्वमिति सिद्धान्तः। इतश्च

यद्येवं सृष्टि-संहारौ संक्षिप्योक्तौ, तत्र प्रवाह-नित्यत्वमिदानी-माह,—

**न कश्चिद्वेद-कर्त्ता च वेदं स्मृत्वा* चतुर्मुखः ।**
**तथैव धर्म्मान्† स्मरति मनुः कल्पान्तरेऽन्तरे‡ ॥२१॥**

इति । स्मृति-निर्म्मातॄणां मन्वादीनां स्मृति-कर्तृत्व-दर्शनात् तथैव श्रुति-निर्म्मातॄणामपि वेद-कर्तृत्वमाशङ्क्य निराचष्टे 'न कश्चित्'-इति । न तावत् व्यासो वेद-कर्त्ता, तस्य विभाग-मात्र-कारित्वात् । नापि चतुर्मुखः, ईश्वरेण चतुर्मुखाय वेद-प्रदानात् । नापि जगदीश्वरः, तस्य सिद्ध-वेदाभिव्यञ्जकत्वात् । तदुक्तं मत्स्य-पुराणे,—

"अस्य वेदस्य§ सर्व्वज्ञः कल्पादौ परमेश्वरः ।
व्यञ्जकः केवलं विप्राः ! नैव कर्त्ता न संशयः ।
ब्रह्माणं मुनयः ! पूर्व्वं सृष्ट्वा तस्मै महेश्वरः ।
दत्तवानखिलान् वेदान् विप्राः ! आत्मनि‖ संस्थितान्¶ ।

---

* वेदं श्रुत्वा,—इति सु॰ पुस्तके, वेदं स्मर्त्ता,—इति सु॰ मू॰ पुस्तके, वेदकर्त्ता,—इति से॰ मू॰ पुस्तके पाठः ।
† तदेव धर्म्मं,—इति से॰ मू॰ पुस्तके पाठः ।
‡ कल्पान्तरान्तरे,—इति सु॰ मू॰, से॰ मू॰ पुस्तकयोः पाठः ।
§ सर्व्वस्य,—इति सु॰ पुस्तके पाठः ।
‖ विप्रयात्मनि,—इति स॰ पुस्तके पाठः ।
¶ सुस्थितान्,—इति सु॰ पुस्तके पाठः ।

---

शारीरकटीकायां रत्नप्रभाभामत्यां च व्यक्तम् । एवमेव न्यायः प्रवा-हस्यानन्तत्वेऽपि योजनीयः ।

मीमांसकाः प्रथम-पादे(१) आकाशकालादीनामिव वर्णानां नित्यत्वं वर्णयामासुः, "व्यवहारे भट्टनयः",—इत्यभ्युपगमं* सूचयितुं देवताधिकरणे तदेव व्यावहारिकं नित्यत्वं सूचितम्(२)। अतः कालिदासादि-ग्रन्थेष्विव(३) वेदेष्वर्थावबोध-पूर्विकायाः पद-विशेषावापोद्वापाभ्यां(४) प्रवृत्तायाः वाक्य-रचनायाः अभावादपौरुषेयत्वं युक्तम्। ब्रह्म-विद्यानां नित्यादेरिव वेदस्याप्यस्ति,—इति मत्वा शास्त्र-योनित्वाधिकरणे वेद-कर्तृत्वं ब्रह्मणोदर्शितम्। अतएव भट्टपादाः सत्यपि पुरुष-संबन्धे स्वातन्त्र्यं निवारयामासुः,—

"यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता"।

इति। तस्मात्, "स्वतन्त्रः कर्त्ता" (पा० १अ० ४पा० ५४सू०) इत्यनेन लक्षणेन लक्षितः कर्त्ता न कोऽपि वेदस्यास्ति(५)।

---

* इत्यभ्युपगतिं—इति मु० पुस्तके पाठः।

---

सर्वेष दर्शनानामैव रक्षितः,—इति बोध्यम्। वैशेषिकोयः न्यायादः, —इति कथञ्चित् सङ्गमयितव्यम्।

(१) मीमांसा-प्रथमाध्याय-प्रथमपादे।

(२) व्यावहारिकं वेदान्तमते, भट्टमते तु पारमार्थिकमेवेतिमन्तव्यम्।

(३) कालिदासादिग्रन्थे यथा बुद्धिपूर्विकाप्रवृत्तिर्न तथा वेदे, इति व्यतिरेके दृष्टान्तः।

(४) आवापः पदान्तरावयवं उद्वापः पूर्वपदापनयः। पदपरिवृत्तिरिति यावदर्थः।

(५) तथाच निःश्वासवदनायासेन वेदाः ब्रह्मणः सम्भूता,—इति ब्रह्मणो वेदकर्तृत्वव्यवहारः आत्मतन्त्रकत्वमस्तु पारमार्थिकं कर्तृत्वं नास्तीति सिद्धान्तार्थः।

‘च’कारः तु-शब्दार्थे वर्त्तमानोऽवैलक्षण्यमाह ; अस्ति हि वक्तव्य-तुर्मुख-मनु-प्रभृतयः स्मृति-कर्त्तारः, वेद-कर्त्ता न कोऽपीति वैलक्षण्यम्। ‘वेदं कृत्वा’* इत्यत्र वाक्ये अनुषङ्ग-न्यायेन द्वितीयार्द्ध-गतं पदत्रयमन्वेतव्यम् । अनुषङ्ग-न्यायस्तु,—(१)द्वितीयाध्याय-प्रथम-पादे वर्णितः । तथाहि,—ज्योतिष्टोम-प्रक्रियायाम्‡ उपसदामुपहोमेषु§ त्रयोमन्त्राः श्रूयन्ते,—“यातेऽग्नेऽयाशया रजाशया हराशया तनुर्वर्षिष्ठा गह्वरेष्ठा, उग्रं वचो अपावधीत् ॥ त्वेषं वचो अपावधीत् स्वाहा”¶ इति । तत्र, ‘अयाशया’ ‘रजाशया’ ‘हराशया’—इति पद-भेदान्मन्त्र-भेदः(२) । तत्र, प्रथम-मन्त्रस्य, तनूरित्यादि-वाक्य-शेषापेक्षाऽस्ति, चरम-मन्त्रः, ‘यातेऽग्ने’—इत्यसुंवाक्यादिमपेक्षते, मध्य-मन्त्रस्तूभयमपेक्षते । तत्रैवं संशयः,—किमपेक्षितार्थ-परिपूरणाय लौकिकः किञ्चमपि पद-सन्दर्भोऽध्याहरणीयः, किं वा श्रूयमाणं पदजातम-

---

* वेदं श्रुत्वा,—इति मु० पुस्तके पाठः ।
† अत्र ‘पुराकानाम्’—इत्यधिकः पाठः मु० पुस्तके ।
‡ ज्योतिष्टोमप्रक्रियायाम्,—इति मु० पुस्तके पाठः ।
§ उपसद्धोमेषु,—इति स० सा० पुस्तकयोः पाठः ।
‖ इत्थमेव विसन्धिः पाठः सर्वत्र । एवं परत्र ।
¶ मीमांसाभाष्ये तु ‘यातेऽग्नेऽयाशया तनूर्वर्षिष्ठा’—इत्यादि आद्यान्तं मन्त्रं लिखित्वा, पश्चात्, ‘रजाशया’ ‘हराशया’—इति प्रतीकद्वयं लिखितम् ।

---

(१) मीमांसायाः,—इत्यादि ।
(२) यातेऽग्नेऽयाशया तनूर्वर्षिष्ठा,—इत्यादिरेकोमन्त्रः, यातेऽग्ने रजाशया तनूर्वर्षिष्ठा,—इत्यादिर्द्वितीयः, यातेऽग्ने हराशया तनूर्वर्षिष्ठा,—इत्यादिस्तृतीयः, इति विवेकः ।

नुषञ्जनीयम्? इति । वाक्यादेः(१) प्रकृत-सम्बन्धेनैव संबन्धात् वाक्य-शेषस्य परस्य-सम्बन्धेनैव संबन्धात् लौकिकाध्याहारः,—इति पूर्व्वः पक्षः । वैदिकाकाङ्क्षायाः सति सम्भवे वैदिक-शब्दैरेव पूरणीयत्वात् अन्व-यस्य-संबन्धानामपि पदानां बुद्धिस्थत्वेनाध्याहार्य्येभ्यः पदेभ्यः प्रत्या-सन्नत्वाच, अनुषङ्ग एव कर्त्तव्यो नाध्याहारः,—इति सिद्धान्तः । एवञ्च सति, प्रकृतेऽपि 'कल्पान्तरे धर्म्मान् स्मरति'—इति पदत्रयं पूर्व्वार्द्धे-ऽनुषञ्जनीयम् । (२)चतुर्मुखस्तस्मिंस्तस्मिन् महाकल्पे परमेश्वरेण दत्तं वेदं स्मृत्वा, तत्र विप्रकीर्णान् वर्णाश्रम-धर्म्मान् संक्षिप्य स्मृति-ग्रन्थ-रूपेण उपनिबध्नाति। तथा च,पितामह-वचनानि तत्र तत्र निबन्ध-कारैरुदाहृियन्ते। चतुर्मुखस्य स्मृति-शास्त्र-कर्त्तृत्वं मनुनाऽप्युक्तम्,—

"इदं शास्त्रन्तु कृत्वाऽसौ मामेव स्वयमादितः ।
विधिवद्ग्राहयामास मरीच्यादींस्त्वहं मुनीन्" ।

इति। यथा चतुर्मुखः, तथैव च स्वायम्भुवो मनुः तस्मिन् तस्मिन्नवा-न्तर-कल्पे वेदोक्तधर्म्मान् बध्नाति । मनु-वदेव, अत्रि-याज्ञवल्क्य-विष्ण्वादयः उपलक्ष्यन्ते । तदेवं प्रतिमहाकल्पं येन येन* चतुर्मुखेन, प्रत्यवान्तर-कल्पञ्च तैस्तैर्म्मन्वादिभिः स्मृति-प्रवचनात्, धर्म्मादेः प्रवाह-नित्यत्वं सिद्धम् । एतदेवाभिप्रेत्यास्मिन्नेव पर्व्वणि पठ्यते,—

"युगेष्वावर्त्तमानेषु धर्म्मोऽप्यावर्त्तते पुनः ।
धर्म्मेष्वावर्त्तमानेषु लोकोऽप्यावर्त्तते पुनः" ।

---

* अत्र 'तेन तेन', – इति पाठोभवितुं युक्तः ।

---

(१) वाक्यस्य च आदिभागस्येत्यर्थः ।

(२) इत्थम् पदत्रयस्य पूर्व्वार्द्धे अनुषङ्गे कृते सति, यो वाक्यार्थः सम्पद्यते, तमाह चतुर्मुख इत्यादिना ।

इति। युग-भेदेन धर्म्म-वैलक्षण्यमभ्युपेत्य, 'धर्म्मान्'—इति बहु-वचन-निर्द्देशः ॥

तदेव वैलक्षण्यं प्रतिजानीते,—

**अन्ये कृत-युगे धर्म्मास्त्रेतायां द्वापरे युगे* ।**
**अन्ये कलि-युगे नृणां युग-रूपानुसारतः ॥ २२ ॥**

इति। अत्र, अन्य-शब्देन धर्म्मस्य स्वरूपान्यत्वमापद्यते, किन्तु प्रकारान्यत्वम्। अन्यथा, धर्म्म-प्रमाणां† चोदनानामपि युग-भेदेन भेदापत्तेः(१)। न हि, इयं चोदना कृतेऽप्येतथा, इयन्तु त्रेतायाम्,—इत्यादि व्यवस्थापकं किञ्चिदस्ति। प्रकारान्यत्वे त्वस्ति दृष्टान्तः। एकस्याप्यग्नि-होत्रस्य‡ सायं-प्रातः-काल-भेदेन अनुष्ठान-प्रकार-भेद-श्रवणात्। "ऋतं त्वा सत्येन परिषिञ्चामि"—इति सायं परिषिञ्चति, सत्यं त्वर्त्तेन परिषिञ्चामीति प्रातः"—इति। ननु, तथार्थ-वादेन मन्त्रः प्रकार-भेदेन उपपादितः§ ;"अग्निर्व्वा ऋतम्, असावा-

---

* परे,—इति मु० मू० पुस्तके पाठः। ऽपरे,—इति वे० मू० पुस्तके पाठः।

† धर्म्मप्रमाण,—इति स० वे० पुस्तकयोः पाठः।

‡ एकस्याग्निहोत्रस्य,—इति मु० पुस्तके पाठः।

§ मन्त्रप्रकारभेद उपपादितः—इति स० वे० पुस्तकयोः पाठः।

---

(१) धर्म्मप्रमाण,—इति हेतुगर्भविशेषणम्। चोदनाप्रमाणकैकधर्म्मत्वात् धर्म्मस्य स्वरूपतोऽन्यत्वे चोदनाभेदस्यावश्यम्भावित्वादिति भावः।

हिताः सत्यम्, अग्निमेव तदादित्येन सायं परिषिञ्चति, अग्निनादित्यं प्रातः सह"—इति। एवन्तर्हि, यथापि, 'युग-रूपानुसारतः'—इत्यनेन प्रकारभेदः उपपद्यते। युगानां स्वरूपमनुष्ठातृ-पुरुष-शक्ति-तारतम्योपेतम्, तदनुसारेणानुष्ठान-वैषम्यं सम्भवति। "यथा शक्नुयात्, तथा कुर्य्यात्"—इति नित्य-कर्मसु निर्णीतत्वात्। तथाहि, षष्ठाध्याये तृतीय-पादे विचारितम्। "यावज्जीवमग्निहोत्रं जुहुयात्"—इति श्रूयते। तत्र, संशयः; किं सर्वाङ्गोपसंहारेणाधिकारः, उत, यदा यावन्ति अङ्गान्युपसंहर्त्तुं, तदा तावद्भिरङ्गैरुपेतं प्रधानं कुर्वन्नधिक्रियते? इति। सर्वाङ्गोपेतस्य प्रधानस्य फल-साधनत्वात् अङ्ग-वैकल्ये फलानुदयात् सर्वोपसंहारः,—इति पूर्व्वः पक्षः। (१)यत हि जीवनमग्निहोत्रस्यैव निमित्ततया श्रूयते, तन्नाशनाम्, सति च निमित्ते नैमित्तिकमवश्यम्भावि, अन्यथा निमित्तत्वासम्भवात्, ततो अशक्याङ्ग-परित्यागेन प्रधानं कर्त्तव्यम्, तावतैव शास्त्र-बलात् फल-सिद्धिः,—इति। बौधायनश्च* स्मरति,—

"यथाकथञ्चिन्नित्यानि प्रत्यक्षमनुरूपतः†।
येन केनापि कार्य्याणि, नैव नित्यानि लोपयेत्।

इति। पुरुष-शक्ति-तारतम्य-कृतमनुष्ठान-वैषम्यमिति विवक्षया 'युगात्'—इत्युक्तम्॥

---

* बोधायनश्च,—इति मु॰ पुस्तके पाठः।

† प्रत्यक्षमनुरूपतः,—इति स॰ बो॰ पुस्तकयोः पाठः। प्रत्यक्षकल्पितः,—इति तु तत्कारपुस्तक।

---

(१) सिद्धान्तमाह यत हीति।

अथ, प्रतिज्ञातं वैलक्षण्यं षड्भिः श्लोकैरुपन्यस्यति। तत्र, चतुर्षु युगेषु प्राधान्येनानुष्ठातुं शक्यान् परम-पुरुषार्थ-हेतून् धर्म्मान् विभजते,—

**तपः परं कृत-युगे त्रेतायां ज्ञानमुच्यते* ।**
**द्वापरे यज्ञमेवाहुः† दानमेव‡ कलौ युगे ॥ २३ ॥**

इति। 'तपः' कृच्छ्र-चान्द्रायणादि-रूपेण भोजन-वर्ज्जनम्। "तपो-नानशनात् परम्"—इति श्रुतेः। यद्यपि, दानस्यापि तपस्त्वं श्रूयते;— "एतत् खलु वाव तपस्तदाहुः यः स्वं ददाति"—इति, तथापि, नात्र तद्विवक्षितम्, दानस्य पृथगुक्तत्वात्। ननु, व्यासेन तपोऽन्यथा स्मर्य्यते,—

"तपः स्वधर्म्म-वर्त्तित्वं शौचं सङ्कर-वर्ज्जनम्" ।

इति। नायं दोषः। कृच्छ्रादेरपि स्व-धर्म्म-विशेषत्वात्। "तप सन्तापे"—इत्यस्माद्धातोरुत्पन्नस्य तपःशब्दस्य देह-शोषणे वृत्तिर्मुख्या। अतएव, स्कान्देऽभिहितम्,—

"वेदोक्तेन प्रकारेण तथा चान्द्रायणादिभिः।
शरीर-शोषणं यत्, तत् तपस्त्युच्यते बुधैः"।

---

* ध्यानमुत्तमम्,—इति वे० मू० पुस्तके पाठः।

† यज्ञमित्याहुः,—इति मु० पुस्तके, यज्ञमित्यूचुः,—इति मु० मू० पुस्तके पाठः।

‡ दानमेकम्—इति मु० मू० पुस्तके पाठः।

इति । अत्र तथैवोक्तम्,—

"कोऽसौ मोक्षः, कथं, केन संसारं प्रतिपन्नवान् ।

इत्यालोचनमर्थज्ञास्तपः शंसन्ति पण्डिताः" ।

इति । सोऽयमेव तपः-शब्दः, "तप आलोचने"—इत्यस्माद्धातो-रुत्पत्तेः । तत् * तपोऽत्र ज्ञान-शब्देन संगृहीतम् । 'पर' शब्दः प्राधान्येनानुष्ठेयतामाह । तर्हि, त्रेतादिषु तपो नाद्रियेत, कृते च ज्ञान-यज्ञ-दानानि नाद्रियेरन्,—इति चेत्, न, इतर-व्यावृत्ति-रूपायाः परिसंख्यायाः अविवक्षितत्वात् । न खलु, इदानीं कश्चिदनुष्ठान-विधिः समुपक्रान्तः, येन विधि-विशेषः शङ्क्येत(१) । भविष्यति तु "षट्-कर्माभिरतः"—इत्यादिना तदुपक्रमः । युग-सामर्थ्यं केवलमत्र निरूप्यते । यथा, 'वसन्ते पुष्प-प्राचुर्यं ग्रीष्मे सन्ताप-बाहुल्यम्' —इत्यादि ऋतु-सामर्थ्यम्, तथा कृतादि-सामर्थ्येन तपआदि-प्राचुर्यं विवक्षितम् । अतएव, 'युगे युगे तु सामर्थ्यम्'—इति वक्ष्यति । सामर्थ्य-ज्ञान-प्रयोजनञ्चाभिधास्यते,—

'तेषां निन्दा न कर्त्तव्या युग-रूपाहि ते द्विजाः' ।

---

* तत्र—इति मु० पुस्तके पाठः ।

---

(१) विधित्वस्याभावे तद्विशेषरूपायाः परिसंख्यायाः कुतः शङ्केति भावः । तथाहि,—अज्ञात-ज्ञापनं, प्रत्यक्ष-प्रमिति-जनकं, अभिधा-नामक-पदार्थान्तर-बोधकपद-घटितं वा वाक्यं विधिः । स च त्रिविधः विधिनियमपरिसंख्याभेदात् । यत्रेदमुक्तम् । "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते" —इति ।

इति। एतत्सामर्थ्यं* वृहस्पतिरपि दर्शयति,—

"तपो धर्म्मः कृत-युगे ज्ञानं त्रेता-युगे स्मृतम्।
द्वापरे चाध्वरः प्रोक्तस्तिष्ये(१) दानं दया दमः"।

इति॥

धर्म्मान् विभज्य तद्वत् प्रमाणानि विभज्यन्ते†—

**कृते तु‡ मानवाधर्म्मास्त्रेतायां गौतमाः स्मृताः।**
**द्वापरे शाङ्ख-लिखिताः कलौ पाराशराः स्मृताः§॥२४॥**

इति। (२)मानवादि-ग्रन्थोक्त-धर्म्माणां प्रचुर-प्रवृत्त्या ग्रन्थ-प्रामाण्य-प्राचुर्य्यमर्थ-सिद्धम्॥

धर्म्मवदधर्म्मस्यापि वक्तुमिष्टत्वात्(३) अधर्म्म-प्रापकं स्थान-विशेषं हेयतया विभज्यते,—

**त्यजेद्देशं कृत-युगे त्रेतायां ग्राममुत्सृजेत्।**
**द्वापरे कुलमेकन्तु कर्त्तारन्तु|| कलौ युगे॥२५॥**

---

* एतत् सामर्थ्यं,—इति स० सो० पुस्तकयोर्नास्ति।
† विभजते,—इति स० सो० पुस्तकयोः पाठः।
‡ मानवोधर्म्मः,—इत्येकवचनान्तपाठः मु० मू० पुस्तके सर्व्वत्र।
§ पाराशरस्मृतिः,—इति सो० मू० पुस्तके पाठः।
|| कर्त्तारञ्च,—इति मु० मू० पुस्तके पाठः।

---

(१) तिष्यः कलिः।
(२) अत्र कृते तु मानवाधर्म्मा इत्यादिना मानवादिधर्म्माणां कृतादिषु प्राचुर्य्यमुक्तं तत्प्रथमं प्रमाणविभागः इत्याशयेनाह मानवादीति।
(३) धर्म्मो यथा उपादेयतया वक्तुमिष्टः, तथा अधर्म्मोऽपि हेयतयेति भावः।

इति। पतितः प्राधान्येन यस्मिन्—एकेन राज्ञा परिपाल्यमाने* ग्राम-समूहात्मनि देशे निवसेत्, स देशः सर्व्वोऽपि कृते धामकर्मात्† अध-र्म्मापादकः। एवं ग्रामे योज्यम्। कुल-त्यागोनाम,—पतितस्य कुले विवाह-भोजनाद्यप्रवृत्तिः। कर्त्तृ-त्यागः सम्भाषणादि-वर्ज्जनम्॥
त्याज्य-देशत् निमित्तान्यपि त्याज्यानि विभजते,—

**कृते सम्भाषणादेव‡ त्रेतायां स्पर्शनेन च§।**
**द्वापरे त्वन्नमादाय‖ कलौ पतति कर्म्मणा ॥ २६ ॥**

इति। कृतादिष्विव कलौ पतित-सम्भाषणादिना न स्वयं पतति, किन्तु वधादिना कर्म्मणा पतितो भवति(१)॥

महापुरुष-तिरस्कारादौ तदीय-शाप-परिपाक-हेतुं कालं वि-भजते,—

---

* पतितः मुख्यम् यस्मिन् येन केन राज्ञा परिपालिते,—इति मु० पुस्तके पाठः।
† कृतधामसर्वात्,—इति मु० पुस्तके पाठः।
‡ सम्भाषणात् पापं,—इति मु० मू० पुस्तके पाठः।
§ स्पर्शनात्तथा,—इति सो० मू० पुस्तके पाठः। त्रेतायाञ्चैव दर्शनात्,—इति मु० मू० पुस्तके पाठः।
‖ द्वापरे त्वर्थमादाय,—इति व्याख्याकारसम्मतः पाठः।

---

(१) कलौ तु संसर्गी वर्षे युगे,—इत्यनेन वर्षसंसर्गस्य निषिद्धत्वात् तत्कर्त्ता कदाचिदपि पापी भवति, न तु पतितो भवति। पतनन्तु स्वयं कृतेन वधा-दिकर्म्मणैवेति भावः।

**कृते तत्क्षणिकः* शापस्त्रेतायां दशभिर्दिनैः।**
**द्वापरे चैक-मासेन† कलौ संवत्सरेण तु‡ ॥ २७ ॥**

इति ॥

धर्मस्य तारतम्यापादकानि निमित्तानि विभजते,—

**अभिगम्य कृते दानं त्रेतास्वाहूय दीयते।**
**द्वापरे याचमानाय§ सेवया दीयते कलौ ॥ २८ ॥**

इति। यत्र प्रतिग्रहीता वर्त्तते, तत्र दाता स्वयं गत्वा गुरुमिव तमभिगम्य(१) कृते दानं करोति। त्रेतायां प्रतिग्रहीतारमाहूय तस्मै दीयते। 'त्रेतासु'—इति बहु-वचनं कृत-द्वापरादिषु जात्येक-वचनमिति प्रदर्शनार्थम्(२)। द्वापरे स्वयमागत्य याचमानाय प्रतिग्रहीत्रे दीयते। कलौ न याच्ञा-मात्रेण, किन्तु सेवया। अवस्थितिरपि धर्मं विभागमाह,—

---

* तत्क्षणिकः,—इति सो० स० पुस्तकयोः पाठः। कृते तु तत्क्षणक-शापः,—इति मु० मू० पुस्तके पाठः।
† द्वापरे मासमात्रेण,—इति मु० म० पुस्तके पाठः।
‡ संवत्सरेण तत्,—इति सो० मू० पुस्तके पाठः।
§ याचमानस्य,—इति सो० मू० पुस्तके पाठः।

---

(१) अभिगम्य विनयादिभिराराध्य।
(२) कृतादीनां प्रत्येकं बहूनामपि भेदस्याविवक्षितत्वादेकवचनम्। अविवक्षितभेदा व्यक्तिरेव हि जातिरित्याख्यायते। यथोक्तम्। "पर्यायवाच्यादित्वया भिन्नास्त्व हि व्यक्तयः। तास्त्व व्यक्तसंख्याभेदा जातिवदाहृता" इति। प्रकृत्यर्थतावच्छेदकत्वसंबन्धेनैकत्वस्यान्वयः,—इत्यपि वदन्ति।

"कृते प्रदीयते गत्वा त्रेतास्वानीयते गृहे ।
द्वापरे च प्रार्थयतः कलावनुगमान्विते" ।

इति ॥

निमित्त-कृतं तारतम्यं दर्शयति,—

**अभिगम्योत्तमं दानमाहूयैव तु* मध्यमम् ।**
**अधमं याचमानाय†सेवा-दानन्तु निष्फलम्‡ ॥२८॥**

इति । उत्तमत्वाद्यवान्तर-विशेषः पुराण-सारे फल-द्वारेणोपपादितः,—

"गत्वा यत् दीयते दानं तदनन्त-फलं स्मृतम् ।
सहस्र-गुणमाहूय याचितन्तु तदर्द्धकम् ।
अभिगम्य तु§ यद्दानं यद्वा दानमयाचितम्‖ ।
विद्यते सागरस्यान्तस्तस्यान्तो नैव विद्यते" ।

इति ।

कलि-धर्माणामस्मिन् ग्रन्थे प्राधान्येन वक्ष्यमाणत्वात् कलि-सामर्थ्यं विशेषतः प्रपञ्चयति,—

---

* आहूतश्चैव,—इति मु॰ मू॰ सो॰ मू॰ पुस्तकयोः पाठः ।
† अधमं याच्यमानं स्यात्,—इति मु॰ मू॰ पुस्तके, कनिष्ठं याचमानं स्यात्,—इति सो॰ मू॰ पुस्तके पाठः ।
‡ सेवया निष्फलं भवेत्,—इति सो॰ मू॰ पुस्तके पाठः ।
§ अभिगम्यन्तु,—इति स॰ सो॰ पुस्तकयोः पाठः ।
‖ दानेऽप्ययाचितम्,—इति मु॰ पुस्तके पाठः ।

*जितो धर्मो ह्यधर्मेण सत्यं चैवानृतेन च† ।
जिताश्चोरैस्तु‡ राजानः स्त्रीभिश्च पुरुषाः कलौ§ ॥ ३० ॥
सीदन्ति चाग्निहोत्राणि गुरु-पूजा प्रणश्यति ।
कुमार्यश्च प्रसूयन्ते तस्मिन् कलि-युगे सदा‖ ॥ ३१ ॥

इति । अधर्मस्य जयोनाम, पाद-त्रयोपेतत्वम्(१) । एकेन पादेन वर्त्तमानत्वम् धर्मस्य पराजयः । तदाह बृहस्पतिः,—

"तिष्ठेऽधर्मस्त्रिभिः पादैर्धर्मः पादेन संस्थितः" ।

इति । सत्यानृतयोर्धर्म्माधर्म्म-रूपत्वेऽपि पृथगुपादानं धर्म्माधर्म्मावुदाहृत्य प्रदर्शनार्थम् । यावत् यावत् कलिर्विवर्द्धते, तावत्तावदधर्मो-विवर्द्धते,—इति विवक्षया चोराद्युदाहरण-बाहुल्यम्(२) ।
तदुक्तं विष्णुपुराणे,—

"यदा यदा सतां हानिर्वेद-मार्गानुसारिणाम् ।
तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः ।

---

* जित इत्यादि श्लोकात् पूर्व्वम्,—'कृते चास्थिगताः प्राणाः' इत्यादि [illegible] श्लोकः पठ्यते मुद्रितपुस्तकद्वये ।

† जितः सत्योऽनृतेन च,—इति मु० मू० पुस्तके पाठः ।

‡ चौरैस्तु,—इति स० सो० पुस्तकयोः, म्लेच्छैस्तु,—इति मु० मू० पुस्तके पाठः ।

§ जिताः,—इति मु० मू०, सो० म० पुस्तकयोः पाठः ।

‖ तस्मिन् कलियुगे तथा,—इति सो० मू० पुस्तके पाठः ।

---

(१) पादचतुर्थांशः ।

(२) तथाच, इदमपि उदाहरणप्रदर्शनार्थमेवेतिभावः ।

न प्रीतिर्वेद-वादेषु पाषण्डेषु दया-रुचः* ।
तदा तदा कलेर्वृद्धिरनुमेया द्विजोत्तमैः" ।

इति ॥

यदुक्तम्,—'तपः परं कृत-युगे'—इत्यादि, तत्र, हेतुमाह,—

†कृते त्वस्थि-गताः प्राणास्त्रेतायां मांसमाश्रिताः‡ ।
द्वापरे रुधिरञ्चैव§ कलौ त्वन्नादिषु स्थिताः‖ ॥ ३२ ॥

इति । 'प्राण' शब्दो वायु-विशेषं वृत्ति-पञ्चकोपेतं हृदयादि-स्थान-निवासिनमाचष्टे । प्राण-स्वरूपञ्च मैत्रेय-शाखायां विस्पष्टं श्रूयते । "प्रजापतिर्वा एकोऽग्रेऽतिष्ठत्, स नारमतैकः, स आत्मानमभिध्यायन् बह्वीः प्रजा असृजत, ता अस्यैवाप्रबुद्धा अप्राणाः स्थाणुरिव तिष्ठमाना अपश्यत्, स नारमत, सोऽमन्यत; एतासां प्रतिबोधनायाभ्यन्तरं विशानि,—इति, स वायुमिवात्मानं कृत्वाऽभ्यन्तरं प्राविशत्, स एको नाशक्नोत्, पञ्चधाऽऽत्मानं प्रविभज्योच्यते; यः प्राणोऽपानः समान उदानो व्यानः,—इति, अथ योऽयमूर्द्ध्वमुत्क्रामयति एष वाव स प्राणः, अथ योऽयमवाञ्चं संक्रामति एष वाव सोऽपानोऽथ योऽयं

* दया रतिः,— इति स० वो० पुस्तकयोः पाठः ।
† अयं श्लोकः, 'जितोधर्मोह्यधर्मेण'—इत्यादि श्लोकात् पूर्वं पठ्यते मू० पुस्तकद्वये ।
‡ मांससंस्थिताः,—इति मु० मू० पुस्तके पाठः ।
§ द्वापरे रुधिरं यावत्,—इति मु० मू० पुस्तके, द्वापरे रक्तगाः प्राणाः,—इति वो० मू० पुस्तके पाठः ।
‖ त्वगन्नादिषु स्थिताः,—इति मु० मू० पुस्तके, कलौ त्वन्नगताः स्थिताः,—इति वो० मू० पुस्तके पाठः ।

स्वविच्छन्न-धातुसपाने स्नापयति यस्मिन्नङ्गे यत्र भवति एवमाव समानोऽप्य योऽयं पीताशितमुद्गिरति निगरति एवमाव सवहानोऽप्य द्वे नेता: शिरा* मनुष्याणामेवमाव स व्यान:,—इति । अस्थैव प्राणवदित्यर्थ: । वाक्-चक्षुरादीनीन्द्रियाण्यपि प्राणाधीन-व्यापार-त्वात् प्राण-शब्देन व्यवह्रियन्ते । अतएव छन्दोगा आमनन्ति;—“न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते प्राण इत्येवाचक्षते”—इति । तस्मात् —इन्द्रिय-वायु-समुदाय-रूपं लिङ्ग-शरीरं लोकान्तर-गमन-क्षमं(१) प्राण-शब्देन विवक्षितम् । तच, अस्थि-मांसादि-मये स्थूल-शरीरे कर्म-रज्जुभिर्निबध्यते । तच बन्धनं तत्तद्युगसामर्थ्यादस्थ्यादिषु व्यवतिष्ठते । तथा च, कृच्छ्र-चान्द्रायणादिषु अन्नाद्याहार-परित्यागात् † मांसाद्युपचयेऽस्थ्नां सहसाऽनुपचयात् प्राणानामव्याकुलतेति कृत-युगे तप: सुकरम् । त्रेतादिषु मांसाद्युपचयेन प्राणानां व्याकुलत्वात् तपोदुष्करम् ।

---

* सिरा,—इति मु॰ पुस्तके पाठ: ।

† कृच्छ्रचान्द्रायणाद्यर्थमाहारपरित्यागात्,—इति स॰ सो॰ पुस्तकयो: पाठ: ।

---

(१) व्यापकस्यात्मन: लोकान्तरगमनादिलक्षणा क्रिया न सम्भवति, तस्मात् लिङ्गशरीरलोकान्तरगमनादिनैव तस्य लोकान्तरगमनादि-व्यपदेश: । उक्तञ्च, “पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्”—इति । शरीरं तावत् त्रिविधं लिङ्गशरीरापरपर्यायं सूक्ष्मशरीरमेकम् । स्थूलशरीरमपरं परिदृश्य-मानम् । अन्यच्च कारणशरीरमविद्यारूपमनयोर्बीजं दर्शनम्, अधि-ष्ठानशरीरं स्थूलभूतानामारम्भकसूक्ष्मभूतमयमित्यन्येषाम् । इदञ्च प्रप-ञ्चेतच्छरीरत्रयस्योपयोगादिति मन्तव्यम् ।

यद्यपि, प्राणानां मांसाद्याश्रयत्वेन ज्ञानादिरूपकार-विशेषो दुर्लभः, तथापि, तपसोऽसम्भवं वक्तुं तद्वर्णनम्(१)। अतएव, कूर्म्मपुराणे, युगान्तराभिप्रायेण तपोऽन्तरं वर्णितम्,—

"अहिंसा सत्य-वचनमानृशंस्यं दमो घृणा(२)।
एतत्तपो विदुर्धीरा न शरीरस्य शोषणम्"।

इति॥

इदानीं युग-सामर्थ्य-वर्णनस्य प्रयोजनमाह,—

युगे युगे च ये धर्म्मास्तत्र तत्र च* ये द्विजाः।
तेषां निन्दा न कर्त्तव्या युग-रूपा हि ते द्विजाः॥३३॥

इति। 'युग-रूपाः' युगानुरूपाः, काल-पर-तन्त्राः,—इति यावत्। तदुक्तमारण्य-पर्व्वणि,—

"भूमिर्नद्यो नगाश्चैते† सिद्धा देवर्षयस्तथा।
कालं समनुवर्त्तन्ते तथा भावा युगे युगे।

---

* तेषु तेषु च,—इति सो० मु० पुस्तके पाठः।
† नगाः शैलाः,—इति स० सो० पुस्तकयोः पाठः।

---

(१) यथा कृतयुगधर्म्मे तपसि प्राणानामस्थिगतत्वमुपयुज्यते, तथा त्रेतादि-युगधर्म्मेषु ज्ञानादिषु तेषां मांसादिगतत्वं नोपयुज्यते इत्याशयः। ज्ञानादिष्वनुपयोगेऽपि तपआदीनामसम्भवे तदुपयोगोऽस्त्येवेति नास-ङ्गतिरिति सिद्धान्तार्थः।
(२) आनृशंस्यमनैष्ठुर्य्यम्, दमइन्द्रियनिग्रहः। घृणा दया।

कालं कालं समासाद्य नराणां नर-पुङ्गवाः ! ।
बल-वर्ष-प्रभावा हि* प्रभवन्त्युद्भवन्ति च" ।

इति ॥ नन्वेवं कलौ पापिनामनिग्रहत्वात् समस्तं धर्माधर्म-व्यवस्था-पक-शास्त्रं विप्लवेत । तथा हि;—'जितोधर्मो ह्यधर्मेण'—इति यदुक्तम्, तत्, "धर्मं चर"—इति श्रूयमाणोविधिः पीड्येत ;

"नास्ति सत्यात् परोधर्मो नानृतात् पातकं परम् ।
स्थितिर्हि सत्ये धर्मस्य तस्मात् सत्यं न लोपयेत्" ।

इति राज-धर्मेषूक्तम्, तच्च, अनृतस्यानिग्रहत्वे बाध्येत ;

"अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशोमहदाप्नोति नरकञ्चैव गच्छति" ।

इति वचनं चोरस्यानिग्रहत्वे बाध्येत ;

"स्त्रीभिर्भर्तुर्वचः† कार्य्यमेष धर्मः परः स्त्रियाः" ।

इति याज्ञवल्क्योक्तिः ;

"भर्त्तारं लङ्घयेद् या तु ज्ञाति-स्त्री-गुण-दर्पिता ।
तां श्वभिः खादयेद्राजा संस्थाने बहुसंश्रितः‡" ।

इति मनूक्तिः ;

"परित्याज्या त्वया भार्य्या भर्त्तुर्व्वचन-लङ्घिनी ।
तव दोषेण यास्तीति त्वं हि वेत्थ यथातथम् ।
सर्व्व-लक्षण-युक्तापि या तु भर्त्तुर्व्यतिक्रमम् ।

---

* बलवर्णप्रभावा हि,—इति स० सो० पुस्तकयोः पाठः ।
† भर्तुर्वचः,—इति स० सो० पुस्तकयोः पाठः ।
‡ संस्थितः,—इति सु० पुस्तके पाठः ।

करोति वा परित्याज्योत्येष धर्मः सनातनः"।

इति ब्रह्मपुराणे सवर्णोपास्तिः; नटस्तुति-वर्ज्यं स्त्री-जितत्व* अनिन्दायां बाधितं स्यात्; अच्छिद्र-काण्डे अग्निहोत्र-प्रायश्चित्तं बहुधा श्रुतम्; आश्वमेधिके पर्व्वणि वैशम्पायनम्,—

"होतव्यं विधिवद्राजन्! ऊर्द्धमिच्छन्ति ये गतिम्।
सा-अन्न-समवेतत् स्यादग्निहोत्रं युधिष्ठिर!
न त्याज्यं वचनमेतदुपहीतव्यं† द्विजातिभिः‡।
यदेतन्नात्§ पृथिव्यां हि किञ्चिदस्ति चराचरम्।
तत् सर्व्वमग्निहोत्रस्य हुते वहं स्वयम्भुवा।
नावबुध्यन्ति ये चैतत्क्रूरास्तु तमसाऽऽवृताः।
ते यान्ति नरकं घोरं रौरवं नाम विश्रुतम्"।

इति; तदेतत्‖ श्रुति-वचनमग्निहोत्रापवादस्यानिन्दायां बाध्येत;

"गुरोरनिष्टाचरणं गुरोरिष्ट-विवर्ज्जनम्।
गुरोश्च सेवाऽकरणं ज्ञानानुत्पत्ति-कारणम्।
अप्राप्य-निन्दा-श्रवणं तद्वाधस्य च दर्शनम्(१)।
विवादश्च तथा तेन ज्ञानानुत्पत्ति-कारणम्"।

---

* स्त्रीजितत्वस्य,—इति मु० पुस्तके पाठः।
† वचन, प्रहीतव्यम्,—इत्यशुद्धः पाठः सर्व्वेष्वेव पुस्तकेषु।
‡ द्विजादिभिः,—इति मु० पुस्तके पाठः।
§ यथैतन्नं,—इति मु० पुस्तके पाठः।
‖ तदेवत् —इति मु० पुस्तके नास्ति।

---

(१) बाधो मरणादि दुःखम्।

इति स्कान्द-पुराण-वचनम्, एतच्च गुरु-पूजा-प्रणाशकत्व* मनिन्द्यायां बाध्येत;

"प्राप्ते तु द्वादशे† वर्षे यः कन्यां न प्रयच्छति।
मासि मासि रजस्तस्याः पिता पिबति शोणितम्"।

इति यम-वचनम्,

"पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता।
भ्रूण-हत्या पितुस्तस्याः सा कन्या वृषली स्मृता"।

इति वचनम्,‡ तदुभयं कुमारी-प्रसवस्यानिन्द्यायां बाध्येत। ननु कथमनिन्द्या? इत्यत आह,—

**युगे युगे तु सामर्थ्यं§ शेषं मुनि-वि-भाषितम्‖।**
**पराशरेण चाप्युक्तं प्रायश्चित्तं विधीयते¶ ॥ ३४ ॥**

इति। 'शेषम्' अवशिष्टं तत्तद्युग-सामर्थ्यं मुनिभिरन्यैर्विशेषेण भाषितम्। तथा चारण्य-पर्व्वण्यपि पठ्यते,—

"कृतं नाम युगं श्रेष्ठं यत्र धर्म्मः सनातनः।
कृतमेव न कर्त्तव्यं तस्मिन् काले युगोत्तमे।

---

* गुरुशुश्रूषा प्रणाशकत्व,—इति मु० पुस्तके पाठः।
† प्राप्ते द्वादशके,—इति स० सो० पुस्तकयोः पाठः।
‡ वचनम्,—इति मु० पुस्तके नास्ति।
§ युगसामर्थ्यविशेषु,—इति सो० मू० पुस्तके पाठः।
‖ मुनिभिर्भाषितम्;—इति मु० मू० पुस्तके पाठः।
¶ प्रदीयते,—इति मु० मू० पुस्तके पाठः।

न तत्र धर्माः सीदन्ति न क्षीयन्ते च वै प्रजाः।
ततः कृतयुगं नाम कालेन गुणतां गतम्।
कृते युगे चतुष्पादश्चातुर्वर्ण्यञ्च शाश्वतम्।
एतत् कृतयुगं नाम त्रैगुण्य-परिवर्ज्जितम्*।
पादेन ह्रसतेऽधर्मो रक्ततां याति चाच्युतः।
सत्य-प्रवृत्ताश्च नराः क्रिया-धर्म-परायणाः।
ततो यज्ञाः प्रवर्त्तन्ते धर्माश्च विविधाः क्रियाः।
स्व-धर्म-स्थाः क्रियावन्तो जनास्त्रेता-युगेऽभवन्।
विष्णुः पीतत्वमायाति चतुर्द्धा वेदएव च।
सत्यस्य भूरि विभ्रंशः सत्ये कश्चिदवस्थितः†।
सत्यात् प्रच्यवमानानां व्याधयो बहवोऽभवन्।
कामाश्चोपद्रवाश्चैव तथा दैवत-कारिताः।
काम कामाः स्वर्ग-कामा यज्ञांस्तन्वन्ति द्वापरे।
एवं द्वापरमासाद्य प्रजाः क्षीयन्त्यधर्मतः।
पादेनैकेन कौन्तेय! धर्मः कलि-युगे स्थितः।
वेदाचाराः प्रशाम्यन्ति धर्मायज्ञ-क्रियास्तथा।
आधयो व्याधयस्तन्द्री-दोषाः क्रोधादयस्तथा(१)"।

इति। तत्रैव,—

* इदं श्लोकार्द्धं मु॰ पुस्तके नास्ति।
† सत्यस्यैव विभ्रंशोऽसत्ये कश्चिदवस्थितः,—इति मु॰ पुस्तके पाठः।

(१) आधिर्मानसी व्यथा। व्याधिः प्रसिद्धएव। तन्द्री निद्राप्रमीलयोरिति-कोषः।

"आन्ध्रकाः क्षत्रियाश्चैव संगिरन्ते* परस्परम् ।
शूद्र-तुल्या भविष्यन्ति तपः-सत्य-विवर्जिताः ।
स्वभावात् क्रूर-कर्माणश्चान्योन्यम् अविशङ्किताः† ।
भवितारो जनाः सर्व्वे संप्राप्ते युग-संक्षये" ।

इत्यादि । ब्रह्म-पुराणेऽपि,—

"दीर्घ-कालं ब्रह्म-चर्य्यं धारणञ्च कमण्डलोः ।
गोत्रान्मातृ-सपिण्डात्तु‡ विवाहो गो-वधस्तथा ।
नराश्व-मेधौ मद्यञ्च कलौ वर्ज्यं द्विजातिभिः" ।

क्रतुरपि,—

"देवराच्च सुतोत्पत्तिर्दत्ता कन्या न दीयते ।
न यज्ञे गो-वधः कार्य्यः कलौ न च कमण्डलुः" ।

इति । पुराणेऽपि,—

"ऊढ़ायाः पुनरुद्वाहं ज्येष्ठांशं गो-वधन्तथा ।
कलौ पञ्च न कुर्व्वीत भ्रातृ-जायां कमण्डलुम्" ।

इति । तथा, अन्येऽपि धर्म्मज्ञ-समय-प्रमाणकाः§ सन्ति,—

"विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम् ।
बालिका-ऽक्षतयोन्योश्च वरेणान्येन संस्कृतिः ।
कन्यानामसवर्णानां विवाहश्च द्विजातिभिः ।

---

* संगिरन्तः,—इति मु० पुस्तके पाठः ।
† अभिशङ्किताः,—इति स० सो० पुस्तकयोः पाठः ।
‡ सपिण्डाच्च,—इति ग्रन्थान्तरे पाठः ।
§ धर्म्मज्ञप्रमाणकाः—इति स० सो० पुस्तकयोः पाठः ।

(१)आततायि-द्विजाग्र्याणां धर्म-युद्धेन हिंसनम्।
द्विजस्याब्धौ तु निर्यातुः* शोधितस्यापि संग्रहः(२)।
सत्र-दीक्षा च सर्वेषां कमण्डलु-विधारणम्।
महाप्रस्थान-गमनं गो-संज्ञप्तिश्च गो-सवे(३)।
सौत्रामण्यामपि सुरा-ग्रहणस्य च संग्रहः(४)।
अग्निहोत्र-हवण्याश्च लेहो लीढा-परिग्रहः†(५)।
वान-प्रस्थाश्रमस्यापि प्रवेशो विधि-चोदितः।
वृत्त-स्वाध्याय-सापेक्षमघ-संकोचनं तथा(६)।

---

* द्विजस्याब्धौ तु नौ-यातुः,—इति निर्णयसिन्धौ पाठः।

† लीढावेक्षा परिग्रहः,—इति मु० पुस्तके पाठः।

---

(१) आततायिनश्च,—"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्र-दारापहारी च षडेते आततायिनः"—इति स्मृत्युक्ताः।

(२) द्विजानां समुद्रयात्रा, समुद्रयात्रायां कृतायां प्रायश्चित्तशोधितस्यापि संसर्गो व्यवहारः।

(३) गोसंज्ञप्तिर्गोवधः। गोसवो यागविशेषः।

(४) सुराग्रहणं सुराग्रहः। (ग्रहः पात्रविशेषः)। तद्ग्रहणञ्च, "सुराग्रहं गृह्णाति"—इत्यादिना सौत्रामण्यां विहितः। सुराग्रहणस्य तत्कर्त्तुः संग्रहः इति तात्पर्यं।

(५). अग्निहोत्रं हूयते यया, सा अग्निहोत्रहवणी वैकङ्कतस्रुव्। तस्या अग्निहोत्रहवण्याहुत्यवशिष्टभागलाभार्थं लेहनं लीढायाश्च तस्याः परिग्रहः।

(६) वृत्तमग्निहोत्रादि, स्वाध्यायो वेदाध्ययनम्। तत्सापेक्षमघसंकोचः,—"एकाहात् शुध्यते विप्रो योऽग्निवेदसमन्वितः"—इत्यादिना विहितः।

प्रायश्चित्त-विधानञ्च विप्राणां मरणान्तिकम् ।
संसर्ग-दोषः स्तेनाद्यैर्महापातक-निष्कृतिः[1] ।
वरातिथि-पितृभ्यश्च पशूपाकरण-क्रिया[2] ।
दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रहः ।
सवर्णान्याङ्गना-दुष्टा* संसर्गः शोधितैरपि ।
अयोनौ संग्रहे वृत्ते परित्यागो गुरु-स्त्रियाः[3] ।
अस्थि-सञ्चयनादूर्द्धमङ्ग-स्पर्शनमेव च[4] ।
शामित्रं‡ चैव विप्राणां[5] सोम-विक्रयणं तथा ।
षड्भक्तानशनेनान्न-हरणं हीन-कर्मणः[6] ।

---

* सवर्णानां तथा दृष्टौ,—इति मु० पुस्तके पाठः ।
† अयोनौ संग्रहेऽवित्ते,—इति मु० पुस्तके पाठः ।
‡ शामित्रं,—इति स० सो० पुस्तकयोः पाठः ।

---

(१) संसर्गदोषस्तेयाद्यमहापातकनिष्कृतिः,—इति निर्णयसिन्धौ पठितं व्याख्यातञ्च; संसर्गदोषस्तेयेतरमहापातकत्रये ब्रह्महत्या-सुरापान-गुरुतल्पगमनरूपे आमरणान्ते या निष्कृतिर्मरणरूपेति ।
(२) उपाकरणमभिमन्त्रणपूर्वकं हननं तच्च गृह्योक्ते मधुपर्काख्यकर्मणि वरातिथये विहितम् । पितृभ्यश्चाष्टकादौ तद्विहितम् ।
(३) अयोनौ शिष्यादौ । "पतनाच्च परित्याज्याः स्त्रियः"—इत्यादिना तत्परित्यागो विहितः ।
(४) अस्थिसञ्चयनं मरणाच्चतुर्थाहादौ विहितम् । अङ्गस्पर्शश्च तदुत्तरं विहितः ।
(५) शामित्रं यागे विहितम् शमितुः ऋत्विग्विशेषस्य कर्म ।
(६) अन्नाभावात् षड्भक्तमनश्नतः "बुभुक्षितस्त्र्यहं स्थित्वा धान्यमब्राह्म-णाद्धरेत्"—इत्यादिना अन्नहरणं विहितम् ।

शूद्रेषु दास-गोपाल-कुलमित्रार्द्ध-सीरिणाम्।
भोज्यान्नता, गृहस्थस्य तीर्थ-सेवाऽतिदूरतः।
शिष्यस्य गुरु-दारेषु गुरुवद्वृत्तिरीरिता*(१)।
आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनिकता तथा(२)।
प्रजार्थन्तु द्विजाग्र्याणां प्रजाऽरणि-परिग्रहः(३)।
ब्राह्मणानां प्रवासित्वं मुखाग्नि-धमन-क्रिया(४)।
बलात्कारादि-दुष्ट-स्त्री-संग्रहो विधि-चोदितः(५)।
यतेस्तु सर्व्व-वर्णेभ्यो† भिक्षा-चर्य्या विधानतः।

---

* गुरुवद्वृत्तिशीलता,—इति निर्णयसिन्धौ पाठः।

† यतेश्च सर्व्ववर्णेषु,—इति निर्णयसिन्धौ पाठः।

---

(१) नैष्ठिकब्रह्मचारिणो गुरौ मृते गुरुदारेषु गुरुवद्वृत्तिर्मन्वादिभिः कथिता।

(२) आपदि सर्व्वतः प्रतिग्रहोऽन्नादानादिश्च ब्राह्मणानां विहिता। अश्वस्तनिकता एकदिनमात्रनिर्व्वाहोचितधनत्वम्। श्वोभवं श्वस्तनं तदस्य पुरुषस्यास्ति,—इति मत्वर्थीयष्ठन्। पश्चात् नञ् समासः। अश्वस्तनिकत्वञ्च ब्राह्मणस्य "अश्वस्तनिक एव वा"—इति मन्वादिभिर्व्विहितम्।

(३) जातकर्म्महोमे सन्ततिजीवनार्थमरणिपरिग्रहः कस्याञ्चिच्छाखायामुक्तः।

(४) दारेष्वग्निं निक्षिप्य साग्निकानां प्रवासः कर्म्मप्रदीपादौ विहितः "निःक्षिप्याग्निं स्वदारेषु परिकल्प्य ऋत्विजं तथा प्रवसेत् कार्य्यवान् विप्रः"—इत्यादिना। तदेवात्र "ब्राह्मणानां प्रवासित्वम्"—इत्यनेन परामर्शः। मुखाग्निधमनञ्च, "मुखेनैके धमन्त्यग्निम्"—इत्यनेन विहितम्।

(५) बलात्कारादिदुष्टस्त्रीसंग्रहश्च, "बलात् प्रमथ्य भुक्ता चेत्"—इत्यादिना विहितः।

नवोदके दशाहञ्च दक्षिणा गुरु-चोदिता[१]।
ब्राह्मणादिषु शूद्रस्य पचनादि-क्रियापि च।
भृग्वग्नि-पतनाद्यैश्च वृद्धादि-मरणन्तथा[२]।
गो-तृप्ति-शिष्टे पयसि शिष्टैराचमन-क्रिया।
पितापुत्र-विरोधेषु साक्षिणां दण्ड-कल्पनम्।
यत्र-सायं-गृहत्वञ्च* सूरिभिस्तत्त्व-मत-परैः†[३]।
एतानि लोक-गुप्त्यर्थं[४] कलेरादौ महात्मभिः।
निवर्त्तितानि कर्म्माणि व्यवस्था-पूर्व्वकं बुधैः।
समयश्चापि[५] साधूनां प्रमाणं वेदवद्भवेत्।

इति। [६]तदुक्तमापस्तम्बेनापि,—"धर्म्मज्ञ-समयः प्रमाणं वेदाश्च"—इति। एवमन्यदप्युदाहार्य्यम्। यथा, श्रुतिभिस्तत्तद्-युग-सामर्थ्यं विधि-निषेधाभ्यां विशेषेण भावितम्, तथा, विहितातिक्रम-निषिद्धाचरणयोः प्रायश्चित्तमपि विस्तरेण पराशरेणोक्तम्। पञ्चमे हि वृद्ध-पराशरस्य वचनानि,—

---

* यतेः सायं गृहत्वं,—इति मु० पुस्तके पाठः।
† तत्त्वदर्शिभिः,—इति निर्णयसिन्धौ पाठः।

---

(१) नवोदके दशाहञ्च,—"दशाहेनैव शुध्येत भूमिष्ठञ्च नवोदकम्"—इत्यादिनोक्तम्। "गुरवे वरं दत्त्वा"—इत्याद्युक्ता दक्षिणा।
(२) एतञ्च,—"वृद्धः शौचस्मृते लुप्तः प्रत्याख्यातभिषक्क्रियः। आत्मानं घातयेद्यस्तु"—इत्यादिना विहितम्। [illegible]।
(३) "यतः सायंगृहो मुनिः"—इत्यनेन विहितं यतेः सायंगृहत्वम्।
(४) गुप्तिः रक्षा।
(५) समयः सम्विद् प्रतिज्ञा इति यावत्।
(६) साधूनां समयस्य प्रमाणत्वमापस्तम्बेनाप्युक्तम् इत्यर्थः।

"जरायु-जाण्ड-जाश्चैव जीवाः संस्वेद-जाश्च ये ।
अवध्याः सर्व्वएवैते बुधैः समनुवर्णितम् ।
निरर्थं विशुद्धानां प्रायश्चित्तं विधीयते ।
अनस्थि-शतमेकन्तु* यदि प्राणैर्व्वियोजयेत् ।
उपोष्यैकाहमादध्यात् प्राणायामांस्तु षोड़श ।
त्रि-स्नानमुदके कृत्वा तस्मात् पापात् प्रमुच्यते ।
अस्थिमत्स्वेतु† द्विगुणं प्रायश्चित्तं विधीयते ।
अनेन विधिना वाऽपि स्थावरेषु मतं बुधः ।
कायेन पञ्चधा हत्वाभ्रामपराधाद्विमुच्यते ।
चतुर्गुणं कर्म्म-कृते द्विगुणं वाक-प्रदूषिते§ ।
कृत्वा तु मानसं पापं तथैवैक-गुणं स्मृतम्" ।

इति । 'च'कारो याज्ञवल्क्य-मन्वादि-समुच्चयार्थः । प्रसिद्धा हि तदीय-ग्रन्थेषु प्रायश्चित्ताध्यायाः । पराशर-वचनन्तु कलि-युगाभि-प्रायम् । सर्व्वेष्वेव कल्पेषु पराशर-स्मृतेः कलि-युग-धर्म्म-पक्ष-पाति-त्वात् प्रायश्चित्तेष्वपि कलि-युग-विषयेषु पराशरः प्राधान्येनादर-णीयः । अतः, पराशर-मन्वादि-प्रोक्तं प्रायश्चित्तं तत्तत्-पाप-परिहा-राय विद्वत्-परिषदा विधीयते । एतदुक्तं भवति,—नाना-मुनिभि-स्तत्तद्-युग-सामर्थ्यस्य प्रायश्चित्तस्य प्रपञ्चितत्वात् तदुभयं पर्य्यालोच्य

---

* अनस्थिमत्स्वेकन्तु,—इति मु० पुस्तके पाठः ।
† शाश्वत,—इति स० सो० पुस्तकयोः पाठः ।
‡ अस्थिमत्स्वेषु,—इति मु० पुस्तके पाठः ।
§ वाक्यदूषिते,—इति स० सो० पुस्तकयोः पाठः ।

निन्दाऽनिन्दयोः* व्यवस्था कल्पनीया। यः पुरुषो युग-सामर्थ्यमनुसृत्य† विहितानुष्ठानं प्रतिषिद्ध-वर्ज्जनं प्रमाद-कृत-पापस्य प्रायश्चित्तञ्च कर्त्तुं शक्तोऽपि न कुर्य्यात्, तद्विषयाणि,—

"भूण-हत्या पितुस्तस्य‡ सा कन्या वृषली स्मृता"।

इत्यादि-निन्दा-वचनानि; अशक्त-विषयं 'तेषां निन्दा न कर्त्तव्या'—इत्यादि वचनम्। अतएव शैवागमे§ पठ्यते,—

"अत्यन्त-रोग-युक्तेऽङ्गे राज-चौर-भयादिषु।
धर्म्माग्नि-देव-कार्य्येषु नित्य-हानौ न पाप-भाक्"।

इति। तस्मान्न कोऽपि धर्म्माधर्म्म-शास्त्रस्य|| विप्लवः—इति॥

ननु, उक्त-प्रकारेण युग-सामर्थ्यस्याशेषस्यानेक-ग्रन्थ-परिचय-भारेण दुर्ब्बोधत्वात् कथं मन्द-प्रज्ञानामल्पायुषां युग-सामर्थ्यानुसारिणश्चातुर्व्वर्ण्य-समाचारस्य निर्णयः? इत्यत आह,—

* निन्दाऽनिन्दयोः,—इति स० सो० पुस्तकयोः पाठः।

† युगसामर्थ्यमनुसृत्य,—इति स० सो० पुस्तकयोः पाठः।

‡ इत्थमेव सर्व्वत्र पाठः। ग्रन्थान्तरे तु "पितुस्तस्याः"—इति पाठः।

§ सौरागमे,—इति स० सो० पुस्तकयोः पाठः।

|| धर्म्मशास्त्रस्य, इति स० सो० पुस्तकयोः पाठः।

☞ पूर्व्वपक्षाणाम्,—(१) 'नन्वेवं कलौ पापिनामनिन्द्यत्वात्'—इत्यादिना सन्दर्भेण भूमिकायां यः पूर्व्वपक्ष उपन्यस्तः, तस्य सिद्धान्तमिदानीमाह एतदुक्तं भवतीत्यादिना।

**अहमद्यैव तत् सर्व्वं* मनुस्मृत्य ब्रवीमि वः।**
**चातुर्व्वर्ण्य-समाचारं शृण्वन्तु मुनि-पुङ्गवाः!†॥३५॥**

इति। अनुस्मृत्य‡ सर्व्वस्य संक्षेपाभिधानात् मन्दानामप्येतत् सुग्रहम्। 'अद्यैव'—इति काल-विलम्ब-निषेधात् अल्पायुषामप्यत्र ग्रन्थे निर्व्वाहः सुलभः। चत्वारो वर्णाश्चातुर्व्वर्ण्यम्, तस्य समाचारो धर्म्मः। आचार-शब्दः शील-पर्य्यायः लौकिकं वृत्तमाचष्टे(१)। समीचीनः शिष्टाभिमत आचारो यस्य धर्म्मस्य कारणत्वेन वर्त्तते, सोऽयं यजन-याजनादि-कर्म्म-लक्षणो धर्म्मः समाचारः। अतएव, आचार-धर्म्मयो र्हेतु-हेतुमद्रूपेण भेदं वक्ष्यति; 'आचारो धर्म्म-पालकः'—इति। श्रुतिश्च धर्म्माचारौ भेदेन व्यपदिशति;—"यथाकारी यथाऽऽचारी तथा भवति"—इति। श्रुत्यन्तरे च कर्म्म-वृत्तयोर्भेदमामनाति;—"अथ, यदि ते कर्म्म-विचिकित्सा वा वृत्त-विचिकित्सा वा स्यात्" इति। यद्यपि,—

'शृणु पुत्र! प्रवक्ष्यामि शृण्वन्तु मुनि-पुङ्गवाः!'।

इत्युपक्रमत्वं पूर्व्वमेव विहितम्, तथापि युग सामर्थ्य-प्रपञ्चनेन

---

* तद्धर्म्मं,—इति स॰ सो॰ मु॰ मू॰ पुस्तकेषु पाठः। तत्‌धर्म्मं, इति बेर॰ मु॰ पुस्तके पाठः।

† ऋषिपुङ्गवाः,—इति स॰ सो॰ पुस्तकयोः पाठः।

‡ अनुस्मृतस्य,—इति स॰ बेर॰ पुस्तकयोः पाठः।

---

(१) वृत्तं चरित्रम्। लौकिकपदेन, "यज्ञशीलता देवपितृभक्तता"—इत्यादि शास्त्रानुक्ताचारोपदेशव्यवच्छेदः।

व्यवहितत्वात् तदेव पुनः स्मार्य्यते । यद्वा, पूर्व्वोक्तं युग-सामर्थ्य-श्रवण-विषयम्, इदन्तु धर्म्म-श्रवण-विषयम्,* इत्यपुनरुक्तिः ॥

वक्ष्यमाण-धर्म्म-जातस्य† परम-पुरुषार्थ-हेतुतां कैमुतिक-न्यायेन(१) अभिधातुं ग्रन्थ-पाठ-तदर्थ-ज्ञाने(२) प्रशंसति,—

**पराशर-मतं‡ पुण्यं पवित्रं पाप-नाशनम् ।**
**चिन्तितं ब्राह्मणार्थाय धर्म्म-संस्थापनाय च ॥ ३६ ॥**

इति । पराशरेण प्रोक्तं ग्रन्थ-जातं 'पराशर-मतं', तच्च पाठ-मात्रेण पुण्य-प्रदम् । पुण्यञ्च द्विविधम्,—इष्ट-प्रापकमनिष्ट-निवर्त्तकञ्च । तदुभयं 'पवित्र-पापनाशन'-शब्दाभ्यां विवक्ष्यते । तदेव ग्रन्थ-जातं 'चिन्तितम्' अर्थतोविचारितं सत् पूर्व्ववत् पुण्य-प्रदं भवति । अर्थ-विचारस्य प्रयोजनं द्वेधा,—स्वानुष्ठानं परोपदेशश्च । तदुभयं 'ब्राह्मण'—इत्यादि-पद-द्वयेनोच्यते । ब्राह्मणस्यार्थोब्राह्मणार्थस्तन्निमित्तं§ स्वधर्म्मानुष्ठानमिति यावत् । 'धर्म्म-संस्थापनम्' परेषां धर्म्मोपदेश-

---

* इदन्तु श्रवणं धर्म्मविषयम्,—इति मु॰ पुस्तके पाठः ।
† धर्म्मजातस्य,—इति स॰ सो॰ पुस्तकयोः पाठः ।
‡ पराशर्य्यं मतं,—इति सो॰ मू॰ पुस्तके, पाराशरमतं,—इति मु॰ मू॰ पुस्तके पाठः ।
§ ब्राह्मणार्थोब्राह्मणनिमित्तं,—इति मु॰ पुस्तके पाठः ।

---

(१) कैमुतिकन्यायश्च,—"समवायस्य सर्व्वेषां तथाप्ये महतोऽल्पकाः । मूलं सर्व्वं क्षयं याति किमुतैकं शरीरकम्"—इति श्लोकोक्तपरिचितकथा-न्यायानुमेयः ।
(२) द्वितीयाद्विवचनान्तं पदमिदम् ।

नानुष्ठापकम्* । यदा, ग्रन्थ-पाठ-तदर्थ-ज्ञानयोरपीष्टोपायकता, तदा किन्तु वक्तव्यम् : अनुष्ठानं पुरुषार्थ-हेतुः,—इति[१]। युक्तञ्चैतत्, पराशरस्य पुलस्त्य-वशिष्ठ-प्रसाद-लब्ध-वरेण सर्व्व-शास्त्र-हृदयाभिज्ञत्वात्†। तथा च, विष्णु-पुराणम्,—

"वैरे महति मद्वाक्यात् गुरोरद्याश्रिता क्षमा।
त्वया, तस्मात् समस्तानि भवान् शास्त्राणि वेत्स्यति‡।
सन्ततेर्न समुच्छेदः§ क्रोधेनाऽपि यतः कृतः।
त्वया, तस्मान्महाभाग! ददाम्यन्यमहं वरम्।
पुराण-संहिता-कर्त्ता भवान् वत्स! भविष्यति।
देवता-पारमार्थ्यञ्च यथावद्वेत्स्यते भवान्।
प्रवृत्ते च निवृत्ते च[२] कर्म्मण्यस्त-मला|| मतिः।
मत्-प्रसादादसन्दिग्धा तव वत्स! भविष्यति"।

इत्याचार-काण्डे प्रथमाध्याये शास्त्रावतारः समाप्तः ॥०॥

(॥ ग्रन्थानुक्रमणिका समाप्ता ॥)

* अत्र, 'ग्राह्यमोक्षादिपदयोरर्थः' इत्यधिकः पाठः स० सो० पुस्तकयोः।

† हृदयाभिज्ञत्वम्,—इति मु० पुस्तके पाठः।

‡ अत्र, 'इति'—इत्यधिकः पाठः मु० पुस्तके। न चासङ्गतः, पराशरवचनानामपि विष्णुपुराणीयत्वेन मध्ये 'इति' शब्दस्यायुक्तत्वात्।

§ ममच्छेदः,—इति मु० पुस्तके पाठः।

|| कर्म्मणि स्वमला,—इति स० सो० पुस्तकयोः पाठः।

(१) तदनेन श्रुतिवाक्यार्थः प्रकृते समर्थितः,—इति मन्तव्यम्।

(२) कामनापूर्व्वकं क्रियमाणं काम्यं कर्म्म शरीरप्रवृत्तिहेतुत्वात् प्रवृत्तं, ब्रह्मज्ञानाभ्यासपूर्व्वकं क्रियमाणं निष्कामं कर्म्म संसारनिवृत्तिसाधनत्वात् निवृत्तमुच्यते। तदुक्तं मनुना : "इह चामुत्र वा काम्यं प्रवृत्तं कर्म्म कीर्त्त्यते। निष्कामं ज्ञानपूर्व्वन्तु निवृत्तमुपदिश्यते"—इति।

अथाचारो निरूप्यते। यत् पृष्टम्,—

'चातुर्वर्ण्य-समाचारं किञ्चित् साधारणं वद'।

इति, तत्रोत्तरमाह,—

**चतुर्णामपि वर्णानामाचारो धर्म्म-पालकः।**
**आचार-भ्रष्ट-देहानां भवेद्धर्म्मः पराङ्मुखः ॥ ३७॥**

इति। आचारस्यान्वय-व्यतिरेकाभ्यामैहिकामुष्मिक-श्रेयोहेतुत्वम्, आचार-लक्षणञ्च, आनुशासनिके पर्व्वण्यभिहितम्,—

"आचाराल्लभते ह्यायु* राचाराल्लभते श्रियम्।
आचारात् कीर्त्तिमाप्नोति पुरुषः प्रेत्य(1) चेह च।
दुराचारो हि पुरुषो नेहायुर्विन्दते महत्।
त्रसन्ति† चास्य भूतानि तथा परिभवन्ति च।
तस्मात् कुर्य्यादिहाचारं यदीच्छेद्‡ भूतिमात्मनः।
अपि पाप-शरीरस्य आचारो हन्त्यलक्षणम्।
आचार-लक्षणो धर्म्मः सन्तश्चाचार-लक्षणाः।
साधूनाञ्च यथावृत्तमेतदाचार-लक्षणम्"।

---

* चायु,— इति मु० पुस्तके पाठः।
† न सन्ति,—इति स० पुस्तके पाठः।
‡ यदिच्छेत्, इति मु० स० पुस्तकयोः पाठः।

---

(१) प्रेत्य परलोके।

त्रैविद्य-वृद्धाः शुचयोऽलसक्रोधवर्ज्जिताः ।

गुरु-शुश्रूषणोद्युक्ताः शिष्टाचारा भवन्ति ते" ।

इति । अत्र, शिष्टानामभिमतो दया-दाक्षिण्य-विनयाद्यन्वितो वृत्त-विशेष आचारः,—इत्युक्तं भवति। स आचारः श्रौतं स्मार्त्तञ्च* धर्म्मं पालयति । धर्म्म-विघातिनां नैष्ठुर्य्य-क्रोधादीनामभावात् । असति त्वाचारे विरोधि-सद्भावात् धर्म्मं एव न प्रवर्त्तते, कथञ्चित्† प्रवृत्तो-ऽपि परावर्त्तते । सोऽयं धर्म्म-पालक आचारश्चतुर्णां वर्णानां साधा-रणः । ननु, 'किञ्चित् साधारणं वद,'—इति धर्म्मः पृष्टः, प्रत्युत्तर-न्त्वाचार-विषयम्,—इति न सङ्गच्छते,—इति चेत् । न, निमित्त-नैमित्तिकयोराचार-धर्म्मयोरभेदस्य विवक्षितत्वात् ॥

इदानीं ब्राह्मणस्यासाधारणं धर्म्मं दर्शयति,—

**षट्-कर्म्माभिरतो नित्यं देवता-ऽतिथि-पूजकः ।**
**हुत-शेषन्तु भुञ्जानो‡ ब्राह्मणो नावसीदति ॥ ३८ ॥**

इति । यजन-याजनाध्ययनाध्यापन-दान-प्रतिग्रहाः षट् कर्म्माणि । तदाह मनुः,—

"अध्यापनं चाध्ययनं यजनं याजनं तथा ।

दानं प्रतिग्रहश्चापि षट् कर्म्माण्यग्र-जन्मनः" ।

---

* श्रौतं स्मार्त्तञ्च,—इति स० सो० पुस्तकयोर्नास्ति।

† तत् कथञ्चित्,—इति मु० पुस्तके पाठः।

‡ अश्नीयात्,—इति सो० मु० पुस्तके पाठः।

इति। अथाध्यापनं कूर्म्म-पुराणे प्रपञ्चितम्,—

"एवमाचार-सम्पन्नमात्मवन्तमदाम्भिकम्।
वेदमध्यापयेद्धर्म्म-पुराणाङ्गानि नित्यशः।
संवत्सरोषिते शिष्ये गुरुर्ज्ञानमनिर्द्दिशन्।
हरते दुष्कृतं तस्य शिष्यस्य वसतो गुरुः।
आचार्य्य-पुत्रः शुश्रूषुर्ज्ञानदो धार्म्मिकः शुचिः।
आप्तः शक्तोऽर्थदः साधुः स्वोऽध्याप्या दश धर्म्मतः[१]।
कृत-ज्ञश्च तथाऽद्रोही मेधावी शुभ-कृन्नरः।
आप्तः प्रियोऽथ विधिवत् षडध्याप्या द्विजोत्तमैः"।

इति। विष्णुरप्याह,—"नापरीक्षितं याजयेत् नाध्यापयेत् नोपनयेत्"—

इति। वशिष्ठः,—

विद्या ह वै ब्राह्मणमाजगाम
गोपाय मां शेवधिस्तेऽहमस्मि।
असूयकायानृजवे अयताय
न मां ब्रूया वीर्य्यवती तथा स्याम्" ॥

इति। अध्यापने नियममाह यमः,—

"सततं प्रातरुत्थाय दन्त-धावन-पूर्व्वकम्।
स्नात्वा हुत्वा च शिष्येभ्यः कुर्य्यादध्यापनं नरः"।

इति। मनुरपि,—

अध्येष्यमाणन्तु गुरुर्नित्यकालमतन्द्रितः।
अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत्।

---

(१) धः धातिः। तदेते आचार्य्यपुत्रादयो दश अध्याप्याः।

इति। अध्येष्यमाणः शिष्यः, तं प्रति* वेदमुच्चारयिष्यन् प्रतिदिनमध्यापन-प्रारम्भे अनुज्ञितः,—"अधीष्व भोः"—इति मुखव्यापारेण, समाप्तौ "विरामोऽस्तु"—इति मुखमुपरमेण; ईश्वर-प्रीतये†। एतत् सर्व्वमभिप्रेत्य श्रुतिराह,—"अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत"—इति।

अथ प्रभाकरोमन्यते,—'उपनयीत'—इति नयतेरात्मनेपदस्य आचार्य्य-करणे पाणिनिना सूचितत्वात्[१] उपनयनाध्यापनयोरङ्गाङ्गिभावेनैक-कर्त्तृकत्वात्[२] आचार्य्यत्व-कामोऽध्यापनेऽधिकारी। अत एव मनुना स्मर्य्यते,‡—

"उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः।
स-कल्पं स-रहस्यञ्च तमाचार्य्यं प्रचक्षते"॥

इति। एवं चाध्यापन-विधौ सृष्टिते सत्यध्ययनस्य पृथग्विधिर्न कल्पनीयो भविष्यति; विहितस्याध्यापनस्याध्ययनमन्तरेणानुपपत्तेरध्ययनस्यार्थ-सिद्धत्वात्[३]। ननु, नाध्ययन-विधौ कल्पना-दोषोऽस्ति,

* अध्येष्यमाणः शिष्यं प्रति,—इति मु० पुस्तके पाठः।

† ईश्वरप्रीतये,—इति नास्ति ग्रा० पुस्तके।

‡ उपनयीत,—इत्यादि,स्मर्य्यते,—इत्यन्तः पाठः स० सो० पुस्तकयोर्नास्ति।

(१) "सम्माननोत्सञ्जनाचार्य्यकरण-ज्ञान-भृति-विगणन-व्ययेषु नियः" (१अ० ३पा० ३६ सू०) इति पाणिनिसूत्रम्।

(२) "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत"—इति श्रुत्या तयोरेक-कर्त्तृकत्वमवगम्यते। तच्च तयोरङ्गाङ्गिभावमन्तरेण नोपपद्यते। अङ्गाङ्गिभावस्य त्वभावे इच्छया कश्चित् किञ्चित् कुर्य्यात् कश्चिच्च किञ्चिदिति नैककर्त्तृत्वनियमः स्यात्। तथाचोपनयनमङ्गं अध्यापनं प्रधानमिति मध्यमानामनुबन्धात् बलात्।

(३) तथाच, अर्थापत्त्या नाध्यापनस्याध्ययनं कल्पते, इति भावः।

कृत्स्नस्यैव विधेः सत्त्वात्* "स्वाध्यायोऽध्येतव्यः" इति श्रुतेः। नैवम्, अधिकार्यश्रवणेनास्य विधेरनुष्ठापकत्वायोगात्। अथोच्येत,— विश्वजिन्न्यायेन रात्रिसत्र-न्यायेन वाऽधिकारी परिकल्प्यताम्;— "विश्वजिता यजेत" इत्यत्र 'एतत्कामः'—† इति (१)नियोज्य-विशेषणश्रवणादनुष्ठानाप्राप्तौ स्वर्गस्य सर्वैरिष्यमाणत्वात्(२) स एव(३) तद्विशेषणत्वेन परिकल्पितः, एवमत्र स्वर्गकामो माणवकः‡(४) नियोज्योऽस्तु। रात्रिसत्रे,— "प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ति"* इत्यर्थवाद-श्रुतायाः प्रति-

---

* अध्ययनादोषः स्यात्,— इति मु० पुस्तके पाठः।

† तत्कामः,— इति मु० पुस्तके पाठः।

‡ माणवकः,— इति स० से० पुस्तकयोर्दृश्यमानः पाठः। एवं परत्र।

* प्रतितिष्ठन्तीह वा इत्थं य एता रात्रीरुपयन्ति,— इति मु० पुस्तके पाठः। उपयन्ति,— इत्यत्र उपयजन्ति,— इत्यन्यत्र पाठः।

---

(१) नियुज्यतेऽधिकारी। कामनयैव हि काम्ये अधिक्रियते इत्यतः तद्विशेषणीभूतायाः फलकामनायाः परिकल्पना आवश्यकी।

(२) सर्वैरिष्यमाणत्वं फलान्तरमपरिकल्प्य स्वर्गस्य परिकल्पनायां विनिगमकम्। तथाच जैमिनिसूत्रम्। "स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्" (मी० ४अ० ३पा० १५सू०) इति। स इति विधेयप्राधान्यविवक्षया पुंसा निर्देशः। स्वर्गो नियोज्यविशेषणं स्यात् सर्वान् पुरुषान् प्रति अविशेषात्। "सर्वे हि पुरुषाः स्वर्गकामाः। कुत एतत्? प्रीतिर्हि स्वर्गः। सर्वश्च प्रीतिं प्रार्थयते"— इति शाबर-भाष्यम्।

(३) यद्यपि 'श्राव्यं सामान्यितेन च'— इत्यादि आकरात् स्वर्गकाममेव नियोज्यविशेषणं, तथापि स्वर्गकामनाया नियोज्यविशेषणत्वे स्वर्गोऽपि तद्विशेषणतया भासते, इत्यभिप्रायेण 'स एव' इत्युक्तम्।

(४) माणवकोऽध्येतव्यवेदो बटुः। 'स्वर्गकामो माणवको वेदः'— इति आकरात्।

स्वाध्ययनस्य प्रयोजनवत्त्वात्, अनित्यं त्वध्यापनं जीवन-कामस्य[१] तत्राधिकारात्। तदाह मनुः,—

"षण्णान्तु[२] कर्मणामस्य त्रीणि कर्माणि जीविका।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः" ॥

इति। अध्ययनन्तु नित्यम्, अकरणे प्रत्यवायस्य मनुना स्मृतत्वात्;

"योऽनधीत्य द्विजो वेदानन्यत्र* कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः" ॥

इति। अतः स्व-विधि-प्रयुक्तमेवाध्ययनम्। न चान्योन्याश्रयः, अध्ययनात् प्रागेव सन्ध्या-वन्दनादाविव पित्रादि-मुखेन विध्यर्थावगमात्, पित्रादिभिर्नियमितत्वादेव माणवकस्य न अप्रवृत्तत्व-दोषोऽस्ति†। यद्यपि, तैत्तिरीय-शाखायाम्,—"स्वाध्यायोऽध्येतव्यः" इति वाक्यस्य पञ्च-महायज्ञ-प्रकरणे पठितत्वाद् ब्रह्मयज्ञ-विधि-रूपता‡, तथाप्यर्थ-ज्ञानानुष्ठान-पूर्वकस्याध्ययनस्य प्रयुज्यमानत्वात् मूल-भूत-श्रुतिरनुमातव्या§। विवरणकारस्तु,—'अध्यापयीत'—इत्यत्र णिजर्थस्य जीवनार्थत्वेन रागतः प्राप्तत्वात्, प्रकृतस्याध्ययनस्य विधेयतामभिप्रेत्य, "अष्ट-वर्षो ब्राह्मण-उपगच्छेत्सोऽधीयीत"—इति वाक्यं विपरिणमय्य¶ उप-

* वेदमन्यत्र,—इति ग्रन्थान्तरे पाठः।

† पित्रादिनियमितत्वात् एवं माणवकस्य नाप्रवृत्ते दोषोऽपि,—इति मु० पुस्तके पाठः।

‡ ब्रह्मयज्ञविधिरूपम्,—इति मु० पुस्तके पाठः।

§ श्रुतिरर्थानुमन्तव्या,—इति स० सो० पुस्तकयोः पाठः।

¶ विपरीतान्वयोपपादयामास, इति स० सो० पुस्तकयोः पाठः।

(१) जीवनं जीविका वृत्तिरिति यावत्।

(२) षण्णां यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहरूपाणाम्।

पादयामास(1)। सर्व्वथाप्यस्ति नित्यः स्वाध्यायाध्ययनस्य विधिः—
"स्वाध्यायोऽध्येतव्य" इत्येवमात्मकः श्रौतः। तथा स्मृतिरपि,—

"तपोविशेषैर्विविधैर्व्रतैश्च विधि-चोदितैः।
वेदः कृत्स्नोऽधिगन्तव्यः स-रहस्यो द्विजन्मना"(2)॥

इति। *अधिगतिरर्थ-विचार-पर्य्यन्तमध्ययनम्। तथा च कूर्म-पुराणे, अध्ययन-तदर्थ-विचारयोरभावे प्रत्यवायः स्मर्य्यते,—

"योऽन्यत्र कुरुते यत्नमनधीत्य श्रुतिं द्विजः।
स वै मूढो न सम्भाष्यो वेदवाह्यो द्विजातिभिः॥
वेदस्य पाठ-मात्रेण सन्तुष्टो वै भवेद्द्विजः।
पाठ-मात्रावसादी तु पङ्के गौरिव सीदति॥
योऽधीत्य विधिवद्वेदं वेदार्थं न विचारयेत्।
स सान्वयः शूद्र-समः पात्रतां न प्रपद्यते"॥

इति। अध्ययनस्येतिकर्त्तव्यतामाह याज्ञवल्क्यः,—

"गुरुञ्चैवाप्युपासीत स्वाध्यायार्थं समाहितः।
आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत्॥
हितं तस्याचरेन्नित्यं मनोवाक्काय-कर्म्मभिः"।

---

* अधिगमि,—इति स० पुस्तके पाठः।

---

(1) अध्यापयीत—इत्यत्र णिजर्थोऽध्ययनप्रयोजकत्वं, तच्चाध्यापनपर्य्यवसितं। अध्यापनस्य जीविकार्थत्वन्तु 'षण्णान्तु कर्म्मणामस्य'—इति पूर्व्वोक्त-वचनात् व्यक्तम्। यथा च तस्य जीवनानुकूलव्यापारतया रागतः प्राप्तत्वात् न विधेयत्वं। किन्तु अप्राप्तस्याध्ययनस्यैव। तथा च, 'अष्टवर्षं ब्राह्मणमुपनयीत'—इत्यादिवाक्यं 'अष्टवर्षो ब्राह्मण उपगच्छेत्' इत्यादि-विपरिणामेनोपपादनीयमिति विवरणकारस्याशयः।

(2) रहस्यमुपनिषत्।

इति । विष्णु-पुराणेऽपि,—

"उभे सन्ध्ये रविं भूप! तथैवाग्निं समाहितः ।
उपतिष्ठेत्, तथा कुर्य्याद्गुरोरप्यभिवादनम् ॥
स्थिते तिष्ठेद्व्रजेत् याते नीचैरासीत चासने* ।
शिष्योगुरोर्नृप-श्रेष्ठ ! प्रतिकूलं न सञ्चरेत् ॥
तेनैवोक्तः पठेद्वेदं नान्य-चित्तः पुरः-स्थितः ।
अनुज्ञातश्च भिक्षान्नमश्नीयात् गुरुणा ततः ॥
शौचाचारवता तत्र कार्य्यं शुश्रूषणं गुरोः ।
व्रतानि(१) चरता ग्राह्योवेदश्च कृत-बुद्धिना" ॥

इति । कौर्म्मेऽपि,—

"आहूतोऽध्ययनं कुर्य्याद्वीक्षमाणो गुरोर्मुखम् ।
नित्यमुद्यत-पाणिः स्यात् साध्वाचारः सुसंयतः" ॥

इति । स्व-कुल-परम्पराऽऽगतायाः शाखायाः पाठोऽध्ययनम् । तदाह वसिष्ठः,—

"पारम्पर्य्यागतोयेषां वेदः स-परिबृंहणः(२) ।
तच्छाखं कर्म्म कुर्व्वीत तच्छाखाऽध्ययनं तथा" ॥

इति । स्व-शाखा-परित्यागं सएव निषेधति,—

"यः स्व-शाखां परित्यज्य पारक्यमधिगच्छति ।
स शूद्रवद्बहिः कार्य्यः सर्व्व-कर्म्मसु साधुभिः ॥

---

* चासिते,— इति स० शे० पुस्तकयोः पाठः ।

---

(१) व्रतानि तत्तद्वेदभागाध्ययने विहितानि गोभिलाद्युक्तानि ।
(२) सपरिबृंहणः षडङ्गोपाङ्गेतिहासादिसहितः ।

क्षीणा शाखोज्झिता येन ब्रह्म तेनोज्झितं परम्।
ब्रह्महेव स विज्ञेयः सद्भिर्नित्यं विगर्हितः" ॥

इति। स्व-शाखाऽध्ययन-पूर्वकमन्य-शाखाऽध्ययनं तेनैवाङ्गीकृतम्,—

"अधीत्य शाखामात्मीयां परशाखां ततः पठेत्"।

इति। वेदमङ्गं-शास्त्रमधीयीत। तदाह बृहस्पतिः,—

"एवं इष्टादिकैर्युक्तं संस्कृत्य तनयं पिता।
वेदमध्यापयेत् पश्चात् शास्त्रं मन्वादिकं तथा ॥
शास्त्रयोर्वेद-मूलः स्यात् श्रुति-स्मृत्योः समः स्मृतः।
सदाचारश्च तथा ज्ञेयमेतत्त्रिकं सदा ॥
अधीत्यचतुरोवेदान् साङ्गोपाङ्ग-पद-क्रमान्[1] ।
स्मृति-हीनाः न शोभन्ते चन्द्र-हीनेव शर्वरी" ॥

इति। अत्र, अध्ययनेन पञ्चधा वेदाभ्यासः उपलक्षितः। तथाच दक्षः,—

"वेद-स्वीकरणं पूर्वं विचारोऽभ्यसनं* जपः† ।
तद्दानं चैव शिष्येभ्योवेदाभ्यासोहि पञ्चधा" ॥

---

* विचारोऽध्ययनं,—इति मु॰ पुस्तके पाठः।
† तपः—इति स॰ सो॰ पुस्तकयोः पाठः।

---

(१) अङ्गानि,—"शिक्षाकल्पौ व्याकरणं निरुक्तं ज्योतिषामिति। छन्दसां विचितिश्चैव षडङ्गोवेद इष्यते"—इत्युक्तानि। उपाङ्गानि पुराणसूत्रादीनि। पदोऽपि पाठविशेषः यत्र सर्वाणि पदानि पृथक् पठ्यन्ते। क्रमोऽपि पाठविशेषः यत्र पूर्वपदं त्यक्त्वा उत्तरपदमुपादीयते।

इति । हारीतोऽपि,—

"मन्त्रार्थ-ज्ञोजपन् जुह्वन्तथैवाध्यापयन् द्विजः ।
स्वर्ग-लोकमवाप्नोति नरकन्तु विपर्य्यये" ॥

इति । गुरु-मुखादेवाध्येतव्यं नतु लिखित-पाठः कर्त्तव्यः ।
तदाह नारदः,—

"पुस्तक-प्रत्ययाधीतं नाधीतं गुरु-सन्निधौ ।
भ्राजते न सभा-मध्ये जार-गर्भइव स्त्रियाः" ॥

इति । अध्ययने वर्जनीयानाह मनुः,—

"नाविस्पष्टमधीयीत न शूद्र-जन-सन्निधौ ।
न निशाऽन्ते परिश्रान्तो* ब्रह्माधीत्य पुनः स्वपेत्" ॥

इति । नारदोऽपि,—

"स्वर-हीनन्तु योऽधीते स्वर-वर्ण-विवर्ज्जितः[१] ।
ऋग्यजुः-सामभिर्दग्धो वियोनिमधिगच्छति" ॥

इति । व्यासोऽपि,—

"अनध्यायेष्वधीतं यद्यच्च शूद्रस्य सन्निधौ ।
प्रतिग्रह-निमित्तं च नरकाय तदुच्यते" ।

॥ इत्यध्ययनाध्यापनयोः प्रकरणं ॥



* प्रतिश्रान्तो । इति मु० पुस्तके पाठः ।

(१) वैदिकानां द्विविधा अध्ययनप्रणाली वर्त्तते, स्वरसहितस्वररहितभेदात् । तदुभयविधस्वररहितमध्ययनमत्र निन्द्यते,—इति मन्तव्यम् ।

अनध्यायाः। ते च द्विविधाः; नित्यानैमित्तिकाश्च। तत्र नित्यानाह हारीतः,—

"प्रतिपत्सु चतुर्दश्यामष्टम्यां पर्वणोर्द्वयोः।
श्वोऽनध्यायेऽद्य शर्वर्यां नाधीयीत कदाचन" ॥

इति। नैमित्तिकानाह याज्ञवल्क्यः,—

"श्व-क्रोष्टु-गर्दभोलूक-साम-बाणार्त्त-निःस्वने(१)।
अमेध्य-शव-शूद्रान्त्य-श्मशान-पतितान्तिके ॥
देशेऽशुचावात्मनि च विद्युत्-स्तनित-संप्लवे।
भुक्त्वाऽऽर्द्रपाणिरम्भोऽन्तरर्द्धरात्रेऽतिमारुते ॥
पांशु-वर्षे दिशां दाहे* सन्ध्या-नीहार-भीतिषु।
धावतः पूति-गन्धे च शिष्टे च गृहमागते ॥
खरोष्ट्र-यान-हस्त्यश्व-नौ-वृक्षेरिण-रोहणे(२)।
सप्त-त्रिंशदनध्यायानेतांस्तात्कालिकान् विदुः" ॥

इति। अन्येऽप्यनध्यायास्तत्र दर्श्यन्ते। तथाच नारदः,—

"शयने विबुधे चैव शयने बोधने हरेः।
अनध्यायस्तु कर्त्तव्यो मन्वादिषु युगादिषु" ॥

---

* पांशुप्रवर्षे दिग्दाहे,—इति मु॰ पुस्तके पाठः।

---

(१) सामनिःस्वने साम्न एवमुख्योऽनध्यायोऽयम्। "सामध्वनावृग्यजुषी नाधीयीत कदाचन"—इत्युक्तेः।

(२) ईरिणं पांशुवालुकभूमिः।

"उपाकर्मणि चोत्सर्गे(१) त्रिरात्रं क्षपणं स्मृतम्।
अष्टकासु अहोरात्रमृत्वन्तासु च रात्रिषु॥
मार्गशीर्षे तथा पौषे माघ-मासे तथैव च।
तिस्रोऽष्टकाः समाख्याताः कृष्ण-पक्षे तु सूरिभिः"॥

इति। गौतमोऽपि,—"कार्त्तिकी-फाल्गुन्याषाढ़ी-पौर्णमासी* तिस्रोऽष्टकाः त्रिरात्रम्",—इति। अत्र-पौर्णमासीरारभ्य त्रिरात्रम्। तथा तिस्रोऽष्टकाः यास्त्वाद्याः, तास्वपि त्रिरात्रमनध्ययनमित्यर्थः। पैठीनसिः,—"कृष्णे भवाः तिस्रोऽष्टकाः, मार्गशीर्ष-प्रभृतयः इत्येके"—इति। आपस्तम्बस्तु, उपाकर्मारभ्य मासं प्रदोषेऽनध्यायमाह,—"श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीत"—इति। प्रदोष-शब्देनात्र पूर्व्व-रात्रिः विवक्षिता। चतुर्दश्यादि-प्रदोषेष्वपि नाधीयीत। तथाच आदित्य† पुराणम्,—

"मेधा-कामस्त्रयोदश्यां सप्तम्याञ्च विशेषतः।
चतुर्थ्याञ्च प्रदोषेषु न स्मरेन्न च कीर्त्तयेत्"॥

इति। चतुर्थ्यादि-तिथि-द्वैविध्ये प्रजापतिः,—

"षष्ठी च द्वादशी चैव अर्द्धरात्रोन-नाड़िका‡।
प्रदोषे नाधीयीत तृतीया नव-नाड़िका"॥

---

* पौर्णमासीति,—इति पाठः मु० पुस्तके।
† आदित्य, इति नास्ति स० सो० पुस्तकयोः।
‡ अर्द्धरात्रोननाड़िकाः,—इति मु० पुस्तके पाठः।

---

(१) उपाकर्मोत्सर्गौ गृह्यसूत्रप्रसिद्धौ अध्ययनारम्भसमाप्त्योः कर्मणी। यद्येतौ गृह्यादिभिरपि सम्यगाख्यातावेवास्तां प्रकृते वर्त्तमानविषयत्वान्न विस्तरः।

इति । कूर्म्म-पुराणे,—

"श्लेष्मातकस्य छायायां शाल्मलेर्मधुकस्य च ।
कदाचिदपि नाध्येयं कोविदार-कपित्थयोः" ॥

इति । उक्तानामनध्यायानामपवादमाह मनुः,—

"वेदोपकरणे चैव स्वाध्याये चैव नित्यके* ।
नानुरोधोऽस्त्यनध्याये होम-मन्त्रेषु चैव हि" ॥

इति । वेदोपकरणान्यङ्गानि । नित्य-स्वाध्यायो ब्रह्म-यज्ञः । शौनकोऽपि,—

"नित्ये जपे च काम्ये च क्रतौ पारायणेऽपि च ।
नानध्यायोऽस्ति वेदानां, ग्रहणे ग्राहणे स्मृतः"† ।

इति । कूर्म्म-पुराणेऽपि,—

"अनध्यायस्तु नाङ्गेषु नेतिहास-पुराणयोः ।
न धर्म्म-शास्त्रेष्वन्येषु पर्व्वण्येतानि वर्ज्जयेत्" ॥

इति ।

॥०॥ इत्यनध्यायप्रकरणं ॥०॥

पूर्व्वमध्ययनाध्यापने वैतिकर्त्तव्यते‡ निरूपिते, अथ यजन-याजने निरूपयामः ।

---

* नैत्यिके,—इत्यन्यत्र पाठः ।
† तथा,—इति स० सो० पुस्तकयोः पाठः ।
‡ इतिकर्त्तव्यत्वेन,—इति मु० पुस्तके पाठः ।

---

च"—इत्युक्त्वा आपज्ज्ञानाय देवकर्म्मोभूम्यादीनां अभावपक्षेऽ-
भूत इति ज्ञेयम् ।

तत्र, यजनस्य सृष्टिं प्रयोजनं चाह भगवान्,—

> "सह-यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजा-पतिः ।
> अनेन प्रसविष्यध्वमेष वोऽस्त्विष्ट-काम-धुक् ॥
> देवान् भावयतानेन ते देवाभावयन्तु वः ।
> परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥
> इष्टान् भोगान् हि वोदेवादास्यन्ते यज्ञ-भाविताः ।
> तैर्दत्तानप्रदायैभ्योयोभुङ्क्ते स्तेनएव सः" ॥

इति । तस्य च यजनस्य सात्त्विक-राजस-तामस-भेदेन त्रैविध्यं सएवाह,—

> "अ-फलाकाङ्क्षिभिर्यज्ञोविधि-दृष्टोयइज्यते ।
> यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥
> अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।
> इज्यते भरत-श्रेष्ठ ! तं यज्ञं विद्धि राजसम् ॥
> विधि-हीनमसृष्टान्नं मन्त्र-हीनमदक्षिणम् ।
> श्रद्धा-विरहितं यज्ञं तामसं परिचक्षते" ॥

इति । आश्वमेधिके पर्व्वणि द्विजादि-सृष्टेः* यज्ञार्थत्व-प्रतिपादनेन यज्ञः प्रशस्यते,†—

> "यजनार्थं द्विजाः सृष्टास्तारकाद्दिवि दैवतः ।
> गावोऽथ यज्ञार्थमुत्पन्नादक्षिणार्थं तथैव च ॥
> सुवर्णं रजतं चैव पात्री‡ कुम्भार्थमेव च ।

---

* द्विजादिसृष्टे,—इति स० सो० पुस्तकयोः पाठः ।
† प्रस्तूयते,—इति स० सो० आ० पुस्तकेषु पाठः ।
‡ पात्रं,—इति मु० पुस्तके पाठः ।

इति । अकरणे प्रत्यवायः कूर्म्म-पुराणे दर्शितः,*—

"नास्तिक्यादथवाऽऽलस्याद्योऽग्नीनाधातुमिच्छति ।
यजेत वा न यज्ञेन स याति नरकान् बहून् ॥
तस्मात्सर्व्व-प्रयत्नेन ब्राह्मणो हि विशेषतः ।
आधायाग्नीन् विशुद्धात्मा यजेत परमेश्वरम्" ॥

इति । श्रुतिश्च, कालादि-विशिष्टमाधानं विधत्ते,—"वसन्ते ब्राह्मणोऽग्निमादधीत ; वसन्तो वै ब्राह्मणस्यर्त्तुः, स्वएवैनमृतावाधाय ब्रह्मवर्चसी भवति, ग्रीष्मे राजन्य आदधीत ; ग्रीष्मो वै राजन्यस्यर्त्तुः, स्वएवैनमृतावाधाय इन्द्रियवान्† भवति, शरदि वैश्य आदधीत ; शरद्वै वैश्यस्यर्त्तुः, स्वएवैनमृतावाधाय पशुमान् भवति",—इति । आश्वमेधिकेऽपि,‡—

"वसन्ते ब्राह्मणस्य स्यादाधेयोऽग्निर्नराधिप !
वसन्तो ब्राह्मणः प्रोक्तो वेद-योनिः स उच्यते ॥
अग्न्याधानं§ तु येनाथ वसन्ते क्रियते नृप ! ।
तस्य श्रीर्ब्रह्मवृद्धिश्च ब्राह्मणस्य विवर्द्धते ॥
क्षत्रियस्याग्निराधेयो ग्रीष्मे श्रेष्ठः स वै|| नृप ! ।
येनाधानन्तु वै ग्रीष्मे क्रियते तस्य वर्द्धते ॥
श्रीः प्रजाः पशवश्चैव वित्तञ्चैव बलं यशः ।

---

* दर्शितः,—इति नास्ति स॰ सो॰ पुस्तकयोः ।
† इन्द्रियावी,—इति मु॰ पुस्तके पाठः ।
‡ आश्वमेधिकेपर्वणि,—इति मु॰ पुस्तके पाठः ।
§ अग्न्याधेयं,—इति मु॰ पुस्तके पाठः ।
|| श्रेष्ठश्च वै,—इति स॰ सो॰ पुस्तकयोः पाठः ।

शरत्-काले तु* वैश्यस्याधानीयोऽग्निरात्मनः ॥

शरद्राजः† स्वयं वैश्योवैश्य-योनिः प्रजायते ।

शरदाधानमेवं वै क्रियते येन पार्थिव ॥

तस्य श्रीः वै प्रजाऽऽयुश्च‡ पशवोऽर्थश्च वर्द्धते"।

इति । आधान-पूर्वकाश्च यज्ञाः, दर्शादयः । तथाच वसिष्ठः,—"वसन्ते ब्राह्मणोऽग्नीनादधीत, दर्श-पूर्णमासाग्रयणेष्टि-चातुर्मास्यैः पशु-सोमैश्च यजेत"—इति । हारीतोऽपि,—

"पाक-यज्ञान् यजेन्नित्यं हविर्यज्ञांश्च नित्यशः ।

सौम्यांस्तु§ विधिपूर्वेण य इच्छेत् धर्ममव्ययम्||" ॥

इति । ते च गोतमेन¶ दर्शिताः,—"अष्टका पार्वण-श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाक-यज्ञ-संस्थाः, अग्न्याधेयमग्निहोत्रं दर्श-पूर्णमासावाग्रयणं चातुर्मास्यं निरूढ़-पशु-बन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः, अग्निष्टोमात्यग्निष्टोमउक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्यामः इति सप्त सोम-संस्थाः" इति । अपरांस्तु महायज्ञ-स्कन्दान् देवलो दर्शितवान्,—"अश्वमेध-राजसूय-पौण्डरीक-

---

* शरदाधेय,—इति स० सो० पुस्तकयोः पाठः ।

† शरदाधि,—इति मु० पुस्तके पाठः ।

‡ तस्यैव श्रीः प्रजायुश्च,—इति मु० पुस्तके पाठः ।

§ सोमांश्च,—इति स० सो० पुस्तकयोः पाठः ।

|| धर्ममव्ययम,—इति स० सो० पुस्तकयोः पाठः ।

¶ गौतमेन,—इति स० सो० पुस्तकयोः पाठः । एवं सर्वत्र ।

भोस्याद्योमश्चायज्ञाः – क्रतवः*" इति । एते सर्व्वे यज्ञाः यथायोगं नित्य-नैमित्तिक-काम्य-भेदेन त्रिविधाः ;—

"नित्यं नैमित्तिकं काम्यं त्रिविधं कर्म्म पौरुषम्"।

इति महाजनोक्तेः। तत्र, यज्ञानां नित्यत्वं बाह्वृचशाखायां† श्रूयते,—"मन्त्रेषु कर्म्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि, तान्याचरथ‡ नियतम्"—इति । राजसनेयि§ शाखायामपि,—

"कुर्व्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समाः"।

इति । "एतद्वै जरामर्य्यमग्निहोत्रं जरया वा ह्येवास्मान्मुच्यते मृत्युना च"—इति च । विधि-वाक्येषु च जीवनाद्युपबन्धस्य नित्यत्व-लक्षणं¶ । तथा|| "यावज्जीवमग्निहोत्रं जुहुयात्" "यावज्जीवं दर्श-पौर्णमासाभ्यां यजेत"—इति । प्रकरणे प्रत्यवायस्य नित्यत्व-गमकः । तथाथर्व्वणे श्रूयते,—"यस्याग्निहोत्रमदर्श-पौर्णमासमनाग्रयणमतिथि-वर्जितं चाहुतमवैश्वदेव* मविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति" इति । तथाच श्रुत्यन्तरम्,—"यस्य पिता पितामहो वा सोमं न पिबेत्, स व्रात्यः"—इति । जीवन-कामना-व्यतिरिक्त-ग्रह-राहू-पनिपात-निमित्तमुपजीव्य प्रवृत्तं नैमित्तिकम्। तथाच श्रुतिः,—

---

* मध्वाद्यश्चक्रतवः,—इति स० सो० पुस्तकयोः पाठः ।
† कुथुमशाखायां,—इति स० सो० आ० पुस्तकेषु पाठः ।
‡ तान्याचरथ,—इति मु० पुस्तके पाठः ।
§ वाजसनेय,—इति मु० पुस्तके पाठः ।
¶ अत्र, नित्यत्वलक्षणं,—इति पाठो भवितुं युक्तः ।
|| अत्र, यथा,—इति पाठो भवितुं युक्तः ।
* चाहुतवैश्वदेव,—इति मु० पुस्तके पाठः ।

"यच एवं इष्ट्याग्नये कामवते पुरोडाशमष्टाकपालं निर्वपेत्"—इति। कामनया प्रवृत्तं काम्यम्। तद्यथा "वायव्यं श्वेतमालभेत भूतिकामः, वायुर्वै क्षेपिष्ठा देवता"—इत्याद्याः काम्यपशवः; "ऐन्द्राग्नमेकादश-कपालं निर्वपेत् प्रजा-कामः" इत्याद्याः काम्येष्टयः"(१) तत्र, काम्यानां कामितार्थ-सिद्धिः फलम्। नित्य-नैमित्तिकयोस्तु यथाविध्यनुष्ठितयोरिन्द्रलोक-प्रापकत्वमाथर्वणे श्रूयते,—

"काली कराली च मनोजवा च
सुलोहिता या च*सुधूम्र-वर्णा।
स्फुलिङ्गिनी विश्वरुची च देवी
लेलायमाना† इति सप्त जिह्वाः॥
एतेषु यश्चरते भ्राजमानेषु
यथाकालं चाहुतयो ह्याददायन्।
तं नयन्त्येताः सूर्यस्य रश्मयो—
यत्र देवानां पतिरेकोऽधिवासः‡॥
एह्येहीति तमाहुतयः सुवर्चसः
सूर्यस्य रश्मिभिर्यजमानं वहन्ति।
प्रियां वाचमभिवदन्त्योऽर्चयन्त्य—
एष वः पुण्यः सुकृतो ब्रह्मलोकः"॥

---

* चापि,—इति मु० पुस्तके पाठः।
† लेलीयमाना,—इति मु० पुस्तके पाठः।
‡ देवानामतिरेकोऽधिवासः,—इति स० से० शा० पुस्तकेषु पाठः।

---

(१) हविष्पश्वोर्भेदश्च,—"इष्टिस्तु चरुणा यागः पशुस्तु पशुनाकृतः। एत-च्चयेन वस्तुः प्रोक्तो होमोऽन्यत् पूर्णं कृतम्"—इत्युक्तदिशाऽवसेयः।

इति । कात्यायनोऽपि,—

"स्व-गृह्योक्तकर्म्मणैव अग्निष्विह तथाविधेः ।
गृह्योक्तयोपकरणे(१)ऽष्टधमिति निश्चयः ॥
तथा कृतेषु यज्ञेषु देवानां तोषणं भवेत् ।
तुष्टेषु देव-संघेषु यज्वा यज्ञ-फलं लभेत् ॥
देवाः सन्तोषिता यज्ञैर्लोकान् सम्वर्द्धयन्त्युत ।
उभयोर्लोकयोर्देवि, भूतिर्यज्ञैः प्रदृश्यते ॥
तस्माद्यज्ञाद्दिवं यान्ति पूर्वजैः सह मोदते ।
नास्ति यज्ञ-समं दानं नास्ति यज्ञ-समो विधिः ॥
सर्व्व-धर्म्म-समुद्देशो देवि, यज्ञे समाहितः" ।

इति । यदि कथञ्चिन्नित्य-कर्म्माणि लुप्येरन्, तदा तत्समाधानमाह प्रजापतिः,—

"दर्शञ्च पूर्णमासञ्च लुप्ताऽथाग्रयणमेव वा ।
एकस्मिन् लुप्त-पादेन द्वयोरर्द्धेन शोधनम् ॥
हविर्यज्ञेष्वशक्तस्य लुप्तमप्येकमाहितः ।
प्राजापत्येन शुद्ध्येत पाक-संस्थासु चैव हि ॥
सन्ध्योपासन-हानौ तु नित्य-स्नानं विलोप्य च* ।
होमं नैमित्तिकं, शुद्ध्येद् गायत्र्यष्ट-सहस्र-कृत् ॥

---

* नित्यस्नानं तु लोप्य च, इति स० से० पुस्तकयोः, लोप्य वा,— इति आ० पुस्तके पाठः ।

---

(१) शाखस्य मध्यम्,— [illegible] । [illegible] समुदाहृतम्"— इत्युक्तलक्षणं [illegible] ।

यस्माऽग्नौ सोम-यज्ञानां हानौ चान्द्रायणञ्चरेत् ।
पञ्चमाऽन्यतमं यज्ञं यज्ञानामधिकारतः ॥
उपवासेन शुद्ध्येत पाक-यज्ञास्तु चैवहि" ।

इति । कात्यायनोऽपि,—

"पितृ-यज्ञात्यये चैव वैश्वदेवात्ययेऽपि च ।
अनिष्ट्वा नव-यज्ञेन नवान्न-प्राशने तथा ॥
भोजने पतितान्नस्य चरुर्वैश्वानरो भवेत्" ।

इति । विहित-हविषा-पर्य्याप्त-द्रव्याभावेऽपि* नित्यं न लोपयेत् । तदाह बौधायनः,—

"यस्य नित्यानि लुप्तानि तथैवाऽऽगन्तुकानि(१) च ।
स-यज्ञ-स्थोऽपि न स्वर्गं स गच्छेत् पतितो हि सः ॥
तस्मात् कन्दैः फलैर्मूलैर्मधुनाऽथ रसेन वा ।
नित्यं नित्यानि कुर्वीत न च नित्यानि लोपयेत्" ॥

इति । ननु, सम्पूर्ण-द्रव्य-सम्पत्तावेव सोम-यागः कार्य्यः । तदाह मनुः,—

"यस्य त्रैवार्षिकं वित्तं पर्य्याप्तं भृत्य-वृत्तये ।
अधिकं वाऽपि विद्येत स सोमं पातुमर्हति" ॥

इति । याज्ञवल्क्योऽपि,—

"त्रैवार्षिकाधिकान्नो यः स हि सोमं पिबेद्द्विजः" ।

---

* अन्नाभावेऽपि,—इति स० सो० शा० पुस्तकेषु पाठः ।

---

(१) यदृच्छयाऽऽपतितनिमित्तमुपजीव्य विहितं यत् नैमित्तिकं, तदेवात्र आगन्तुकतया निर्दिष्टमिति बोध्यम् ।

इति । त्रैवार्षिकाद्यभावे सोम-यागादर्वाचीनदर्शादय एव कार्य्याः । एतदपि स एवाह,—

"प्राक्सौमिकीः क्रियाः कुर्य्याद्यस्यान्नं वार्षिकं भवेत्" ।

इति । अल्प-धनस्य यज्ञो मनुना निषिध्यते,—

"पुण्यान्यन्यानि कुर्वीत श्रद्दधानो जितेन्द्रियः ।
न त्वल्प-दक्षिणैर्यज्ञैर्यजेतेह कथञ्चन ॥
इन्द्रियाणि यशः स्वर्गमायुः कीर्त्तिं प्रजाः पशून् ।
हन्त्यल्प-दक्षिणो यज्ञस्तस्मान्नाल्प-धनो यजेत्" ॥

इति । मत्स्य-पुराणेऽपि,—

"अन्नहीनो* दहेद्राष्ट्रं मन्त्र-हीनस्तथर्त्त्विजः ।
आत्मानं दक्षिणा-हीनो नास्ति यज्ञ-समो रिपुः" ॥

इति । एवञ्च वक्ष्यमाणानि वचनानि 'कर्म्मभिर्मुक्तैः' इत्यादिवचनेन विरुध्येरन्निति चेत् । नैवम्, एतेषां वचनानां काम्य-याग-विषयत्वात् । 'सम्पूर्णानुष्ठान-शक्तौ सत्यामेव काम्यं कर्त्तव्यम्'—इति षष्ठाध्याये(१) मीमांसितम् । तथाहि—"ऐन्द्राग्नमेकादश-कपालं निर्वपेत् प्रजा-कामः"—इत्यत्र, किं यथाशक्ति प्रयोगेणाप्यधिकारः, उत सर्वाङ्गोपसंहारेण ?—इति संशयः । नित्येषु यथाशक्ति प्रयोगस्य पूर्वाधिकरणे निर्णीतत्वात् काम्येऽपि तथा,—इति प्राप्ते ब्रूमः । नित्यानामकरणेन प्रत्यवायपरिहारार्थत्वात् तत्र यथाशक्ति प्रयोगः । अपरिहार्य्याणि हि नित्यानि, जीवनादि-निमित्त-योगेन तत्प्रवृत्तेः । नैमित्तिकं

---

* पर्वहीनो,—इति ग्रन्थान्तरधृतः पाठः ।

---

(१) मीमांसा-षष्ठाध्याय-तृतीयपाद-द्वितीयाधिकरणे ।

प्रत्यप्रवर्त्तकत्वे निमित्तत्वमेव हीयेत । कामना तु न निमित्तं ; येना-वश्यसिद्धिं प्रवर्त्तयेत् । अतो न काम्यस्यापरित्याज्यत्वम् । तथा सति, फल-सिद्ध्यर्थमेव काम्यस्यानुष्ठेयत्वात्, फलस्य च सर्व्वाङ्गोपसंहार-प्रधानमन्तरेणानिष्पत्तेः, यदा सर्व्वाङ्गानुष्ठान-शक्तिस्तदैव काम्य-मनुष्ठेयम्,—इति सिद्धान्तः ॥

॥०॥ इति यजन-प्रकरणम् ॥०॥

इत्थं यजनं निरूपितं, याजने तु विधिः श्रूयते,—“द्रव्यार्ज्जनम् ब्राह्मणः प्रतिग्रहीयाद्वा याजयेदध्यापयेद्वा” । नचायं नित्य-विधिः, अकरणे प्रत्यवायादि-नित्य-लक्षणाभावात् । अपि तु काम्य-विधिः, द्रव्यार्ज्जन-कामस्य तत्राधिकारात् । तथापि, नापूर्व्व-विधिः[१] जीव-नोपायत्वेन याजनस्य प्राप्तत्वात् । तद्धेतुत्वञ्च मार्कण्डेय-पुराणे दर्शितम्,—

“याजनाध्यापने शुद्धे तथा शुद्धः* प्रतिग्रहः ।
एषा सम्यक् समाख्याता त्रितयं† तस्य जीविका” ॥

इति । नापि परिसङ्ख्या, नित्य-प्राप्तेरभावात् । तस्मात्‡ पक्षे प्राप्ता-न्नियम-विधिरयम् । तथाच नियमः पुरुषार्थएव, नतु क्रत्वर्थः,

* शुद्ध,—इति स० सो० शा० पुस्तकेषु ।
† अत्र, ‘त्रितयी’—इति पाठो भवितुं युक्तः ।
‡ तस्मात्,—इति नास्ति स० सो० शा० पुस्तकेषु ।

(१) अपूर्व्वस्य पूर्व्वमप्राप्तस्य विधिरपूर्व्वविधिः अत्यन्ताप्राप्तप्रापको विधिरिति यावत् । तथोक्तम्,—“विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते”—इति ।

द्रव्यार्जन-नियमस्य पुरुषार्थत्वेन लिप्सा-सूत्रे(१) विचारितत्वात्
तथाहि,—द्रव्यप्राप्तिः, क्रत्वर्था वा पुरुषार्था वा?—इति संशयः।
तत्र पूर्वः पक्षः, क्रत्वर्थत्वं, तथा सति* नियमस्यार्थवत्त्वात्। ब्राह्मणस्य
याजनादिना, क्षत्रियस्य जयादिना,† वैश्यस्य कृष्यादिना,—इति
नियमः। स च पुरुषार्थ-पक्षेऽनर्थकः स्यात्, उपायान्तरेणार्जि
तस्यापि द्रव्यस्य कुम्भनिर्माणादि-पुरुषार्थ-सम्पादकत्वात्। क्रतुस्तु
भाव्यता विहन्यति। अतश्च नियमोऽर्थवान्,—इति प्राप्ते ब्रूमः।
द्रव्यं हि सम्पादितं सत् पुरुषं प्रीणयति। अतस्तस्य पुरुषार्थत्वं
प्रत्यक्षं दृष्टम्‡। क्रत्वर्थता तु नियमान्यथाऽनुपपत्त्या कल्प्यते। दृष्टञ्च
कल्प्याद्बलीयः। सति च पुरुषार्थत्वे, क्रतोरपि भोजनादिवत्
पुरुष-कार्यतया तदर्थताऽप्यर्थात् सम्पद्यते। नियमस्तु, पुरुषार्थेऽप्यर्जन-
विधौ किञ्चिददृष्टं जनयिष्यति(२)। क्रत्वर्थत्वे त्वाहिताग्नेर्जीवनलोपेन-

---

* तथापि, इति स० सो० का० पुस्तकेषु पाठः।

† क्षत्रियस्य जयादिना,—इति नास्ति स० पुस्तके।

‡ प्रत्यक्षं,—इति मु० पुस्तके पाठः।

§ क्रत्वर्थे,—इति गु० पुस्तके पाठः।

---

(१) "यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात् (मी० ४अ० १पा० २सू०)" इत्येतस्मिन् सूत्रे भाष्यकारस्य द्वितीयवर्णके,—इति बोध्यम्।

(२) तथाच याजनादिनाऽर्जने किञ्चिददृष्टं जन्यते, तन्नियमस्यार्थवत्त्वात्। इतरथा अन्यथाऽपि प्रकारेण द्रव्यार्जनसम्भवात् याजनादिनियमो-वचनस्यैवाप्रसक्तः स्यादिति बोध्यम्।

वासोवा दक्षिणत उपवीय"—इति। मन्त्रेषु ऋष्यादिषु ज्ञानञ्च* याजनाध्ययनेन छन्दोग-ब्राह्मणे समाम्नायते,—"यो ह वा अविदितार्षेय-छन्दो दैवत-ब्राह्मणेन याजयति वा अध्यापयति वा, स्थाणुं वर्च्छति† गर्त्तं वा पद्यते प्र वा मीयते पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्ति, अथ यो मन्त्रे मन्त्रे विद्यात्, सर्वमायुरेति श्रेयान् भवति अयातयामान्यस्य छन्दांसि भवन्ति‡, तस्मादेतानि मन्त्रे मन्त्रे विद्यात्"—इति।

ननु क्वचित् याजनस्य क्वचित् प्रतिग्रहस्य च निन्दितत्वात्§ नह गुणवतः स्वाध्याय-याजनयोरप्याम्नायते,—"रिक्तत्व वा एष-मेव रिच्यते योऽयाज्यं याजयति प्रति वा गृह्णाति, याजयित्वा प्रतिगृह्य वाऽनश्नन् त्रिः स्वाध्यायं वेदमधीयीत, त्रिरात्रं वा सावित्रीं गायत्रीमन्वातिरेचयति"—इति। तथाऽन्यत्रापि,—"दुहेव वा एष छन्दांसि योऽयाज्यं याजयति, स येन यज्ञ-क्रतुना याजयेत्, सोऽरण्यं परेत्य शुचौ देशे स्वाध्यायमेवैनमधीयन्नासीत; तस्यानशनं दीक्षा, स्थानमुपसदः, आसनस्य सुत्या, वागाज्यम्, मन उपभृत्, धृतिर्ध्रुवा, प्राणो हविः, सामाध्वर्युः, स वा एष यज्ञः प्राण-दक्षिणोऽनन्त-दक्षिणः समृद्धतरः"॥ इति चेत्। नायं दोषः, अयाज्य-

---

* मन्त्रब्राह्मणादिज्ञानञ्च,—इति स० सो० आ० पुस्तकेषु पाठः।

† स्थाणुं वा ऋच्छति,—इति आ० स० पुस्तकयोः पाठः।

‡ अथ, इत्यादि, भवन्ति,—इत्यन्तः पाठः स० सो० आ० पुस्तकेषु नास्ति।

§ क्वचित् याजनं निन्दितम्,—इति पाठः स० आ० पुस्तकयोः।

|| तस्यानशनम्,—इत्यादि, 'समृद्धतरः'—इत्यन्तः पाठो नास्ति स० सो० आ० पुस्तकेषु।

याजन-विषयत्वात्। जीविकाद्यभावापन्नस्य प्राण-रक्षार्थमयाज्य-याजनमपि समाम्नायते। तथा, वाजसनेय-ब्राह्मणम्,—"आपद्ये वै सम्राट्कामाद्याज्यं याजयति अप्रतिग्राह्यस्य वा प्रतिगृह्णाति*"इति। तत्र, प्रायश्चित्तं छन्दोगाः आमनन्ति,—"अयाज्य-याजने हविष्या-शनः मासं चतुर्थ-काले भुञ्जानः(१) तत्सन्तान् गायेत्"—इति। तथा सुमन्तुरपि स्मरति,—"शूद्र-याजकः शूद्र-द्रव्य-परित्यागात्† पूतो भवति। अभिशस्त-पतित-पौनर्भव-भ्रूणह-पुंश्चल्य-शौण्डिक-वस्त्र-कार‡-तैलिक-चाक्रिक-ध्वजि-सुवर्ण-कार-चर्म-कार-पत्रक§ वर्धकि-गण-गणिक-शौण्डिक-व्याध-निषाद-रजक-वन्द-चर्म-काराः¶ अभोज्यान्ना-अप्रतिग्राह्याश्चयाज्याश्च"। तथाच वशिष्ठः,—दक्षिणा-त्यागाच्च पूतो भवतीति विज्ञायते||"—इति। तथा बौधायनोऽपि,—"अप्र-तिग्राह्यस्य प्रतिगृह्य अयाज्यं वा याजयित्वा नाश्नात्, तत्र याव-

---

* अप्रतिग्राह्यस्य प्रतिगृह्णाति, इति शा० स० पुस्तकयोः पाठः।

† सर्व्वद्रव्यपरित्यागात्,—इति मु० पुस्तके पाठः।

‡ शस्त्रकार,—इति मु० पुस्तके पाठः।

§ सुवर्णतैलिक्य वढक,—इति मु० पुस्तके पाठः।

¶ कुलाढ्यचर्म्मकाराः, इति मु० पुस्तके पाठः।

|| दक्षिणात् मापाच,—इति स० सो० शा० पुस्तकेषु पाठः।

---

(१) भोजनस्य कालत्रयमतिवाह्य चतुर्थकाले भुञ्जानः। पूर्व्वदिने उपोष्य परदिने दिवा अभुक्त्वा रात्रौ भुञ्जान इति यावत्। तथाचोक्तम्। "मुनिभिर्द्विरशनं प्रोक्तं विप्राणां मर्त्यवासिनां नित्यम्। अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः"—इति।

मज्जित्वा तरत्समन्दीयं जपेत्*"—इति। †अयाज्य-याजकत्वं देवलेन दर्शितम्,—

"यः शूद्रान् पतितांश्चापि याजयेदर्थ-कारणात्।
याजितो वा पुनस्ताभ्यां ब्राह्मणोऽयाज्य-याजकः" ॥ इति।

॥०॥ इति याजनप्रकरणम् ॥०॥

तदेवं याजनं निरूपितम्। अथ दान-प्रतिग्रहौ निरूप्येते। तत्र, दान-विषया श्रुतिः,—"दानमिति सर्वाणि भूतानि प्रशंसन्ति, दानान्नातिदुष्करं तस्माद्दाने रमन्ते"—इति। तथा वाक्यान्तरमपि,—"दानं यज्ञानां वरूथं दक्षिणा लोके दातारं सर्व-भूतान्युपजीवन्ति, दानेनारातीरपानुदन्त, दानेन द्विषन्तो मित्रा भवन्ति, दाने सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदन्ति,"—इति। आदित्य-पुराणेऽपि,—

"न दानादधिकं किञ्चित् दृश्यते भुवन-त्रये।
दानेन प्राप्यते स्वर्गः श्रीर्दानेनैव लभ्यते॥
दानेन शत्रून् जयति व्याधिर्दानेन नश्यति।
दानेन लभ्यते विद्या दानेन युवती-जनः॥
धर्मार्थ-काम-मोक्षाणां साधनं परमं स्मृतम्"। इति।

एवं श्रुति-स्मृतिभ्यां प्रशंसा-पूर्वको दान-विधिरवगतः। याज्ञवल्क्यस्तु‡ सत्पात्रे दानं आह,—

---

* आद्याज्ञमवाज्ञमभिहिता पठेत्,—इति मु॰ पुस्तके पाठः।
† अत्र, 'तथा'—इत्यधिकः पाठः स॰ सो॰ शा॰ पुस्तकेषु।
‡ याज्ञवल्क्योऽपि,—इति स॰ सो॰ शा॰ पुस्तकेषु पाठः।

"दातव्यं प्रत्यहं पात्रे निमित्तेषु*(१) विशेषतः ।
याचितेनापि दातव्यं श्रद्धा-पूतन्तु शक्तितः ॥
गो-भू-तिल-हिरण्यादि पात्रे दातव्यमर्चितम्† ।
नापात्रे विदुषा किञ्चिदात्मनः श्रेय इच्छता" ॥ इति ।

तयोरन्यतरः स्वरूप-विधिरितरस्तु गुण-विधिः । मनुरपि,—

"दानं‡ धर्मं निषेवेत नित्य-नैमित्तिक-संज्ञकम् ।
परितुष्टेन भावेन पात्रमासाद्य शक्तितः" ॥ इति ।

वह्नि-पुराणे च§ वित्त-वैयर्थ्योक्ति-पुरःसरं दानं विहितम्,—

"यस्य वित्तं न दानाय नोपभोगाय देहिनाम् ।
नापि कीर्त्यै न धर्माय तस्य वित्तं निरर्थकम् ॥
तस्माद्वित्तं समासाद्य दैवाद्वा पौरुषादथ ।
दद्यात् सम्यग्-द्विजातिभ्यः कीर्त्तनानि च कारयेत्" ॥ इति ।

विष्णुधर्मोत्तरे दानाभावे बाधमाह,—

"सीदते द्विज-मुख्याय योऽर्थिने न प्रयच्छति ।
सामर्थ्ये सति दुर्बुद्धिर्नरकायोपपद्यते" ॥ इति ।

---

* निमित्तेषु,—इति सु० पुस्तके पाठः ।
† दातव्यमर्चिते,—इति सु० पुस्तके पाठः । "अर्चितमर्चिताय दद्यात्" —इति वचनान्तरदर्शनादुभयमपि सङ्गच्छते ।
‡ दानधर्मं,—इति स० आ० पुस्तकयोः पाठः ।
§ वह्निपुराणेऽपि,—इति सु० पुस्तके पाठः ।

---

(१) पात्रम्,—"विद्यावृत्तोपसम्पन्नः प्रशान्तः [illegible] सत्यवादी-कृतज्ञः । [illegible] दाता यज्वा ब्राह्मणः पात्र-मात्रः"—मित्युक्तलक्षणम् । निमित्तं संक्रान्त्यादि ।

ब्रह्म-पुराणेऽपि,—

"सदाचाराः कुलीनाश्च रूपवन्तः प्रियम्वदाः ।
बहु-श्रुताश्च धर्म्मज्ञा याचमानाः परान् ग्टहान् ॥
दृश्यन्ते दुःखिनः सर्व्वे प्राणिनः सर्व्वदा भुवे ।
अदत्त-दानाः जायन्ते पर-भाग्योपजीविनः" ॥ इति ।

व्यासोऽपि,—

"अदत्त-दानमभ्यस्तं नास्ति नास्तीति यत् पुरा ।
तदिदं देहि देहीति विपरीतमुपस्थितम्" ॥ इति ।

स्कान्देऽपि,—

"देहीत्येवं ब्रुवन्नर्थी जनं बोधयतीव सः ।
यदिदं कष्टमर्थित्वं प्रागदान-फलं हि तत् ॥
एकेन तिष्ठताऽधस्तादन्येनोपरि तिष्ठता ।
दातृ-याचकयोर्भेदः कराभ्यामेव सूचितः ॥
दीयमानन्तु योमोहात् गो-विप्राग्नि-सुरेषु च ।
निवारयति पापात्मा तिर्य्यग्योनिं व्रजेत्तु सः" ॥ इति ।

शातातपोऽपि,—

"मा ददस्वेति यो ब्रूयात् गव्यग्नौ ब्राह्मणेषु च ।
तिर्य्यग्-योनि-शतं गत्वा चाण्डालेष्वपि जायते" ॥ इति ।

दानस्य स्वरूपं तथेतिकर्त्तव्यताञ्च* देवलो दर्शयति,—

"अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम् ।

---

* तथेतिकर्त्तव्यताश्च,—इति स० से० प्रा० पुस्तकेषु पाठः ।

दानमित्यभिनिर्दिष्टं व्याख्यानं तस्य वक्ष्यते ॥
द्वे हेतू षडधिष्ठानं षडङ्गं द्विविपाक-युक् ।
चतुः-प्रकारं त्रि-विधं त्रि-नाशं दानमुच्यते ॥
नाल्पत्वं वा बहुत्वं वा दानस्याभ्युदयावहम् ।
श्रद्धा भक्तिश्च दानानां वृद्धि-क्षयकरे* हि ते ॥
धर्म्ममर्थश्च कामश्च व्रीडा-हर्ष-भयानि च ।
अधिष्ठानानि दानानां षडेतानि प्रचक्षते ॥
पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम् ।
केवलं धर्म-बुद्ध्या† यत् धर्म-दानं तदुच्यते ॥
प्रयोजनमपेक्ष्यैव प्रसङ्गात् यत्प्रदीयते ।
तदर्थ-दानमित्याहुरैहिकं फल-हेतुकम् ॥
स्त्री-पान-मृगयाऽक्षाणां प्रसङ्गाद् यत् प्रदीयते ।
अनर्हेषु च रागेण काम-दानं तदुच्यते ।
संसदि व्रीडया श्रुत्वा चार्थिभ्योऽर्थं प्रयाचितम् ॥
प्रदीयते च यद्दानं व्रीडा-दानमिति स्मृतम् ॥
दृष्ट्वा प्रियाणि श्रुत्वा वा हर्षाद् यत् प्रयच्छति ।
हर्ष-दानमिति प्राहुर्दानं धर्म-विचिन्तकाः‡ ॥
आक्रोशानर्थ हिंसानां§ प्रतीकाराय यद्भवेत् ।

---

* वृद्धिक्षयकरे,—इति स० शो० पुस्तकयोः पाठः।
† त्यागबुद्ध्या,—इति स० शो० पुस्तकयोः पाठः।
‡ धर्म्मचिन्तकाः,—इति स० शो० का० पुस्तकेषु पाठः।
§ आक्रोशानर्थहिंसानां—इति स० शो० पुस्तकयोः पाठः।

हीयते वाऽपकर्षेभ्यो* भय-दानं तदुच्यते ॥
दाता प्रतिग्रहीता च श्रद्धा देयञ्च धर्म्म-युक् ।
देश-कालौ च दानानामङ्गान्येतानि षड्विदुः ॥
अपाप-रोगी धर्म्मात्मा दित्सुरव्यसनः†(१) शुचिः ।
अनिन्द्य-जीव-कर्म्मा च षड्भिर्दाता प्रशस्यते ॥
त्रि-शुक्लः शुक्ल-वृत्तिश्च‡ घृणालुः सकलेन्द्रियः ।
विमुक्तो योनि-दोषेभ्यो ब्राह्मणः पात्रमुच्यते" ॥ इति ।

त्रिशुक्ल इति, त्रिभिर्मातापित्राचार्य्यैः विज्ञानेन शुक्लः ।

"सौमुख्याद्यभिसम्प्रीतिरर्थिनो दर्शने तथा ।
सत्-कृतिश्चानसूया च दाने श्रद्धेत्युदाहृता ॥
अपराबाधमक्लेशं स्व-यत्नेनार्ज्जितं धनम् ।
स्वल्पं वा विपुलं वाऽपि देयमित्यभिधीयते ॥
यत्र यद् दुर्ल्लभं द्रव्यं यस्मिन् कालेऽपि वा पुनः ।
दानार्हौ देश-कालौ तौ स्यातां श्रेष्ठौ नचान्यथा ॥
अन्यथा-देश-कालानां पात्र-दानोऽप्यसम्पदा ।

---

* पापकर्म्मभ्यो,—इति स० सो० पुस्तकयोः पाठः ।

† दित्सुरव्याकुलः,—इति मु० पुस्तके पाठः ।

‡ कृशवृत्तिश्च,—इति स० सो० शा० पुस्तकेषु पाठः ।

---

(१) व्यसनं कामजकोपजदोषविशेषः । तदुक्तम् । "मृगयाऽक्षो दिवा-स्वप्नः परीवादः स्त्रियो मदः । तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः । पैशून्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः"—इति ।

हीनं वापि भवेच्छ्रेष्ठं श्रेष्ठं वाऽप्यधमं भवेत् ॥
दुष्फलं निष्फलं हीनं तुल्यं विपुलमक्षयम् ।
षड्विधञ्च फलुद्दिष्टं षडेतानि विपाकतः ॥
नास्तिक्य-स्तेन-हिंस्रेभ्यः जाराय पतिताय च ।
पिशुन-भ्रूण-हन्तृभ्यो* यद्दत्तं दुष्फलं भवेत् ॥
महदप्यफलं दानं श्रद्धया परिवर्जितम् ।
पर-बाधा-करं दानं हीनमप्यूनतां† भवेत् ॥
यथोक्तमपि चाहार्यं चित्तेन कलुषेण तु ।
तत्तु संकल्प-दोषेण दानं तुल्य-फलं भवेत्‡ ॥
युक्ताङ्गैः सकलैः§ षड्भिर्दानं स्याद्विपुलोदयम् ।
(१)अनुक्रोश-वशाद्दत्तं दानमक्षयतां|| भवेत् ॥
ध्रुवमाजस्रिकं¶ काम्यं नैमित्तिकमिति क्रमात् ।
वैदिको** दानमार्गोऽयं चतुर्द्धा वर्ण्यते बुधैः ॥
(२)प्रपाऽऽराम-तडागादि सर्व-काम-फलं ध्रुवम्†† ।

---

* भ्रूणहन्तृभ्यो,—इति स० पुस्तके पाठः।
† श्रोतमप्यूनतां,—इति सु० पुस्तके पाठः।
‡ चेद्गतं—इति स० शो० पुस्तकयोः पाठः।
§ सकलं,—इति सु० पुस्तके पाठः।
|| मक्षयतां,—इति सु० पुस्तके पाठः।
¶ ध्रुवमाजस्रिकं,—इति सु० पुस्तके पाठः।
** दैवको,—इति सु० पुस्तके पाठः।
†† सर्वकामफलप्रदम्,—इति सु० पुस्तके पाठः।

---

(१) अनुक्रोशो दया।
(२) प्रपा पानीयशाला। आराम उपवनम्। तडागोऽकृत्रिमजलाशयविशेषः।

तस्माद्दानकृतं पुण्यं न कथ्यं परिकीर्त्तयेत्" ॥ इति ।

नित्य-नैमित्तिक-काम्य-विमलाख्याश्च चत्वारो दान-भेदाः पुराण-सारे दर्शिताः । सात्त्विकादि-भेदान् भगवानाह,—

"दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे च काले पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥
यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्राजसमुदाहृतम् ॥
अ-देश-काले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं* तत्तामसमुदाहृतम्" ॥ इति ।

तत्र फलविशेषोविष्णुधर्मोत्तरे दर्शितः,—

"तामसानां फलं भुङ्क्ते तिर्य्यक्त्वे मानवः सदा ।
वर्ण-सङ्कर-भावेन(१) वार्द्धके यदि वा पुनः ॥
बाल्ये वा दास-भावेन नात्र कार्य्या विचारणा ।
अतोऽन्यथा तु मानुष्ये राजसानां फलं भवेत् ॥
सात्त्विकानां फलं भुङ्क्ते देवत्वे नात्र संशयः" । इति ।

तत्र दान-पात्रमाह याज्ञवल्क्यः,—

"न विद्यया केवलया तपसा वाऽपि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षते" ॥ इति ।

व्यासोऽपि,—

"विद्या-वृत्तोपपत्ति-हीनः प्रशान्तः

---

* असत्कृतमवज्ञातं,—इति मु० पुस्तके पाठः ।

---

(१) विजातीययोर्वर्णयोः संयोगात् योजायते सोयं वर्णसङ्करः ।

भगिनी-भागिनेयानां मातुलानां पितुःस्वसुः* ।
दरिद्राणाञ्च बन्धूनां दानं कोटि-गुणं भवेत्" ॥ इति ।

शातातपोऽपि,—

"अविलुप्तमधीयानमतिथ्यागमितं योद्विजम् ।
भोजने चैव दाने च दहत्यासप्तमं कुलम्" ॥ इति ।

महाभारते,—

"इत्वा क्षत-दाराणां ये विप्राः देश-विप्लवे ।
अर्थार्थमभिगच्छन्ति तेभ्योदानं महाफलम्" ॥ इति ।

अपाचमाह मनुः,—

"न वार्य्यपि प्रयच्छेत्तु वैडाल-व्रतिके द्विजे ।
न वक-व्रतिके पापे नावेद-विदि धर्म्म-वित् ॥
त्रिष्वप्येतेषु दत्तं हि विधिनाऽप्यर्ज्जितं धनम् ।
दातुर्भवत्यनर्थाय परत्रादातुरेव च ॥
यः कारणं पुरस्कृत्य व्रत-चर्य्यां निषेवते ।
पापं व्रतेन संछाद्य वैडालं नाम तद्व्रतम् ॥
अधोदृष्टिर्नैष्कृतिकः स्वार्थ-साधन-तत्परः ।
शठोमिथ्याविनीतश्च वक-व्रत-चरोद्विजः"§ ॥ इति ।

शातातपोऽपि,‖—

* पितुःस्वसुः,—इति मु० पुस्तके पाठः ।

† पितृभ्रातृदाराणां,—इति स० चो० श्रा० पुस्तकेषु पाठः ।

‡ नवाप्यपि,—इति स० चो० पुस्तकयोः पाठः । नवाप्स्वपि, –इति मु० पुस्तके पाठः ।

§ वकव्रतिचरोद्विजः,—इति मु० पुस्तके पाठः ।

‖ नास्तीदं स० चो० श्रा० पुस्तकेषु ।

"भद्रं देवलके दत्तमप्रतिष्ठञ्च वार्द्धुषौ(१) ।
यच्च वाणिज्यके दत्तं न च तत् प्रेत्य नो इह" ॥ इति ।

देवलकश्च स्कान्दे दर्शितः,—

"देवार्चन-रतो विप्रो वित्तार्थी वत्सर-त्रयम् ।
स वै देवलको नाम हव्य-कव्येषु गर्हितः" ॥ इति ।

वृद्धमनुः,—

"पात्र-भूतोऽपि यो विप्रः प्रतिगृह्य प्रतिग्रहम् ।
असत्सु विनियुञ्जीत तस्मै देयं न किञ्चन ॥
सञ्चयं कुरुते यश्च प्रतिगृह्य समन्ततः ।
धर्मार्थं नोपयुङ्क्ते च* न तं तस्करमर्च्चयेत्" ॥ इति ।

विष्णुधर्म्मोत्तरे,—

"पर-स्थाने वृथा दानमशेषं परिकीर्त्तितम् ।
आरूढ़े पतिते †चैव अन्यथार्जितैश्च‡ यत्(२) ॥

---

* नोपयुञ्जीत,—इति मु० पुस्तके पाठः ।
† आरूढ़पतिते,—इति मु० पुस्तके पाठः ।
‡ अन्यथार्थैर्धनैश्च,—इति स० सो० पुस्तकयोः पाठः ।

---

(१) वार्द्धुषौ वृद्धिजीविनि ।

(२) परस्थाने परभूमौ । भूस्वामिनोऽनुज्ञया तु न दोषः । "अननुज्ञात-भूमिर्हि फलस्य भजनभुवे"—इत्युक्तेः । आरूढ़े पतिते इति अव-कीर्णिनैष्ठिकब्रह्मचारिविषयम् । "आरूढ़ो नैष्ठिकं धर्म्मं यस्तु प्रच्यवते पुनः । प्रायश्चित्तं न पश्यामि येन शुद्ध्येत् स आत्महा"—इति, "आ-रूढ़पतितं विप्रं मण्डलाच्च विनिःसृतम् । उद्बद्धं कृमिदष्टञ्च स्पृष्ट्वा चान्द्रायणं चरेत्"—इति चैवमादिवचनेभ्यस्तस्य निन्दितत्वात् । "वहिस्तूभयथापि स्मृतेराचाराच्च" (३अ०४पा०४३सू०) इति शा-रीरकसूत्रमप्यत्र स्मर्त्तव्यम् । अन्यथार्जितैरिति, अन्यथा शास्त्रीयोपायं विना आर्जितैर्धनैरित्यर्थः । अन्याधर्मैरिति तु युक्तः पाठः ।

अधर्मसाधने दानं पतिते तस्करे तथा।
गुरोश्चाप्रीति-जनके कृतघ्ने ग्राम-याजके॥
वेद-विक्रयिणे चैव यस्य चोपपतिर्गृहे।
स्त्रीभिर्जितेषु यद्दत्तं व्याल-ग्राहे तथैव च॥
ब्रह्म-बन्धौ च यद्दत्तं यद्दत्तं वृषलीपतौ।
परिचारेषु यद्दत्तं वृथादानानि षोडश"॥ इति।

महाभारते,—

"पङ्ग्वन्धबधिरामूकाव्याधिनोपहताश्च ये।
भर्त्तव्यास्ते महाराज, न तु देयः प्रतिग्रहः"॥ इति।

पात्रेऽप्येवमपात्र-दानस्य मनुर्निषेधति,—

"अनर्हते यद्ददाति न ददाति यदर्हते*।
अर्हानर्हापरिज्ञानाद्दानाद् धर्माच्च हीयते"॥ इति।

भविष्योत्तरे देय-स्वरूपं निरूपितम्,—

"यद्यदिष्टं विशिष्टञ्च न्याय-प्राप्तञ्च यद्भवेत्।
तत्तद् गुणवते देयमित्येतद्दान-लक्षणम्"॥ इति।

यथेष्टस्य देयस्य-प्राप्तौ विशेषमाह याज्ञवल्क्यः,—

"स्व-कुटुम्बाविरोधेन देयं दार-सुतादृते।
नान्वये(१) सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुतम्"॥ इति।

बृहस्पतिरपि,—

---

* अनर्हते यद्ददाति नददाति यदर्हते,—इति स०, शो० पुस्तकयोः पाठः।

---

(१) अन्वयः सन्ततिः।

"(१)कुटुम्ब-भक्त-वसनाद् देयं यदतिरिच्यते"। इति।

शिव-धर्मे,—

"तस्माद्विभागं विभवं जीवनाय प्रकल्पयेत्।

भाग-द्वयन्तु धर्मार्थमनित्यं जीवनं यतः"॥ इति।

कुटुम्बाविरोधेन देयमित्युक्तं, तदपवादमाह व्यासः,—

"कुटुम्बं पीडयित्वाऽपि ब्राह्मणाय महात्मने।

दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता"॥ इति।

देय-विशेषेण फल-विशेषमाह मनुः,—

"वारि-दस्तृप्तिमाप्नोति सुखमक्षयमन्न-दः।

तिल-प्रदः प्रजामिष्टां दीप-दश्चक्षुरुत्तमम्॥

भूमि-दो भूमिमाप्नोति दीर्घमायुर्हिरण्य-दः।

गृह-दोऽग्र्याणि वेश्मानि रूप्य-दो रूप* मुत्तमम्॥

वासोदश्चन्द्र-सालोक्यमश्वि-सालोक्यमश्व-दः।

अनडुद्-दः श्रियं तुष्टां† गो-दो ब्रध्नस्य विष्टपम्‡॥

यान-शय्या-प्रदो भार्यामैश्वर्यमभय-प्रदः।

धान्य-दः शाश्वतं सौख्यं ब्रह्म-दो ब्रह्म शाश्वतम्॥

सर्वेषामेव दानानां ब्रह्म-दानं विशिष्यते"। इति।

---

* रूप्य,—इति मु० पुस्तके पाठः।

† पुष्टां,—इति मु० पुस्तके पाठः।

‡ पिष्टपम्,—इति पाठान्तरम्।

---

(१) कुटुम्बशब्देनावश्यभरणीया उच्यन्ते। ते च, "माता पिता गुरुर्भार्या प्रजा दीनाः समाश्रिताः। अभ्यागतोऽतिथिश्चैव पोष्यवर्ग उदाहृतः" —इति मनुनोक्ताः।

"शतमिन्दु-क्षये दानं सहस्रन्तु दिन-क्षये ।
विषुवे शत-साहस्रं व्यतिपातेष्वनन्तकम्" ॥ इति ।

भारद्वाजः*,—

"व्यतिपाते वैधृतौ† च(१) दत्तमक्षय-मुद्भवेत्" इति ।

विष्णुः,—

"दिन-क्षयो दिन-च्छिद्रं पुत्र-जन्मादि चापरम् ।
आदित्यादि-ग्रहाणाञ्च नक्षत्रैः सह सङ्क्रमः‡ ॥
विज्ञेयः पुण्य-कालोऽयं ज्योतिर्विद्भिर्विचार्य्य च ।
तत्र दानादिकं कुर्य्याद्दातात्मनः पुण्य-वृद्धये" ॥ इति ।

दिन-क्षय-लक्षणमुक्तं वशिष्ठेन,—

"एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा ।
तदा दिन-क्षयः प्रोक्तः शत-साहस्रिकं फलम्" ॥

दिन-च्छिद्रस्य लक्षणं ज्योतिःशास्त्रेऽभिहितम्,—

"तिथ्यर्द्ध-तिथि-योगर्क्ष-च्छेदादिः प्रतिपर्व्वकः§ ।

---

* भरद्वाजः,—इति मु० पुस्तके पाठः ।
† वैधृते,—इति मु० पुस्तके पाठः ।
‡ दिनक्षये दिनच्छिद्रे पुत्रजन्मादिकेषु च । आदित्यादिग्रहाणाञ्च नक्षत्रैः सह सङ्क्रमे,—इति मु० पुस्तके पाठः ।
§ तिथ्यर्द्धतिथियोगर्क्षच्छेदादौ प्रतिपर्व्वकः,—इति स० सो० आ० पुस्तकेषु पाठः ।

---

(१) व्यतिपातवैधृतौ सूर्य्याचन्द्रमसोर्योगविशेषौ । "श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके । यद्यमा रविवारेण व्यतिपातः स उच्यते"—इत्युक्तो वा व्यतिपातोऽप्यत्र ।

षड्गौ विषेश-विष्णु-समाख्यः प्राह मार्कण्डः ॥
केदारि-कालः कथितस्तिथि-मध्ये घटी-द्वयम्* ।
भाग-वह्नि-समोपेतं† तच्चेदल-फलैर्युतम् ॥
पलैः षोडशभिः पूर्णं नाडिका-द्वितयं युतौ‡ ।
केदारि-समयः प्रोक्तो दानेऽनन्त-फल-प्रदः" ॥

दानस्य निषिद्ध-कालमाहतुः शङ्ख-लिखितौ,—

"आहारं मैथुनं निद्रां सन्ध्या-कालेषु वर्जयेत् ।
कर्म चाध्यापनञ्चैव तथा दान-प्रतिग्रहौ" ॥ इति§ ।

स्कन्द-पुराणे,—

"रात्रौ दानं न कर्त्तव्यं कदाचिदपि केनचित् ।
हरन्ति राक्षसा यस्मात्तस्माद्दातुर्भयावहम् ।
विशेषतोनिशीथे तु न शुभं कर्म शस्यते ॥
अतोविवर्जयेत् प्राज्ञोदानादिषु महानिशाम्" । इति ।

तत्र प्रतिप्रसवमाह देवलः,—

"राहु-दर्शन-संक्रान्ति-यात्राऽऽदौ प्रसवेषु च¶ ।
दानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते" ॥ इति ।

अथ संक्रान्ति-मध्योत्कर-कर्कट-विषयः, उभयान्तरे संक्रान्तिषु

---

* तिथिमध्ये घटीद्वयम्,—इति नास्ति मु० पुस्तके ।
† भागादिवह्निमोपेतं,—इति मु० पुस्तके पाठः ।
‡ युगे,—इति मु० पुस्तके पाठः ।
§ 'इति' शब्दो नास्ति स० ग्रे० पुस्तकयोः ।
¶ विवाहाभ्युदयादिषु,—इत्यन्यत्र पाठः । चन्द्रोपरागे, यज्ञे पुत्र जन्मादि,—इति तदर्थः ।

राशि-स्नानादि-निषेधं प्रक्रम्य "तुला मकर-कर्कटौ"—इति पर्य्युदासात्।
मत्स्य-पुराणे दानस्य प्रशस्ता देशविशेषा निर्द्दिष्टाः,—

"प्रयागादिषु तीर्थेषु पुण्येष्वायतनेषु च।
दत्त्वा चाक्षयमाप्नोति* नदी† पुण्य-वनेषु च" ॥ इति।

तथा व्यासेनापि,—

"गङ्गा-द्वारे प्रयागे च अविमुक्ते च पुष्करे।
मकरे चाङ्गदाये च गङ्गा-सागर-सङ्गमे ॥
कुरु-क्षेत्रे गया-तीर्थे तथाचामर-कण्टके।
एवमादिषु तीर्थेषु दानमक्षयतामियात्" ॥

॥०॥ इति दानप्रकरणम् ॥०॥

तदेवं चेतिकर्त्तव्यं दान-प्रकरणं निरूपितम्, अथ प्रतिग्रहो निरूप्यते। तत्र श्रौतोविधिः पूर्व्वमुदाहृतः,—"द्रव्यमर्जयन् ब्राह्मणः प्रतिगृह्णीयात्",—इति। तत्र, याजने येषां यथा पूर्व्वमनुक्रान्ता, तेषां‡ प्रतिग्रहेऽपि यथायथमनुसन्धातव्या§।

ननु प्रतिग्रहो मनुना निन्दितः,—

"प्रतिग्रहः प्रत्यवरः स तु विप्रस्य गर्हितः" ॥ इति।

नैवम्, अस्यानिन्दाया असत्-प्रतिग्रह¶ विषयत्वात्। तच्चोपरितने वचने स्पष्टीकृतम्,—

---

* दत्त्वाचाक्षय्यमाप्नोति,—इति मु० पुस्तके पाठः।
† नदी,—इत्यत्र, तथा,—इति स० सो० पुस्तकयोः पाठः।
‡ तत्र याजने पूर्व्वमनुक्रान्तेषां,—इति मु० पुस्तके पाठः।
§ अनुसन्धातव्यः,—इति मु० पुस्तके पाठः।
¶ अयाचितप्रतिग्रह,—इति मु० पुस्तके पाठः।

प्रतिग्रह-निमित्तं तु त्यागेन तपसैव च" ॥ इति ।

नायं दोषः, द्विजातिभ्यः प्रतिग्रहः प्रशस्तः शूद्रात् प्रतिग्रहो निन्दितः*—इतिव्यवस्थायाः सुवचत्वात्। ननु सत्प्रतिग्रहेऽपि क्वचिदपि प्रत्यवायः प्रतीयते, "प्रतिग्रहात् शुध्यति"—इत्युक्तेः। बाढ़ं, अत एव वेद-पारगत्वादि-सामर्थ्य-रहितस्य प्रतिग्रहे प्रत्यवायः†। एतदेवाभिप्रेत्य‡ स्मृत्यन्तरे वेद-पारगस्य प्रत्यवायो निवारितः,—

"षडङ्ग-वेद-विद्विप्रो§ यदि कुर्य्यात् प्रतिग्रहम् ॥
न स पापेन लिप्येत पद्म-पत्रमिवाम्भसा" ॥ इति ।

एवमेव न्यायो याजनाध्यापनयोर्योजनीयः। अयाज्य-याजन-कुत्सिताध्यापन-दुष्टप्रतिग्रहेभ्यो वाऽशक्तं, स्वाश्रितेष्वधिकार-वैकल्येन|| प्रवर्त्तमानस्य तस्य प्रत्यवायः, मुख्याधिकारिणो विहित-याजनादि-प्रवृत्तौ न कश्चिद्दोषः,—इति विवेकः। सद्वत्-प्रतिग्रहौ विवेचयति व्यासः,—

"द्विजातिभ्यो धनं लिप्सेत् प्रशस्तेभ्यो द्विजोत्तमः।
अपि वा जाति-मात्रेभ्यो न तु शूद्रात् कथञ्चन" ॥ इति ।

सतामलाभे असतोऽपि प्रतिग्रहश्चतुर्विंशतिमतेऽभ्यनुज्ञातः,—

"वीदंसेत्¶ प्रतिग्रहीयाद् ब्राह्मणेभ्यस्ततो नृपात् ।

---

* प्रतिग्रहे दोषः,—इति मु० पुस्तके पाठः।
† दोषः,—इति मु० पुस्तके पाठः।
‡ इत्यभिप्रेत्य,—इति मु० पुस्तके पाठः।
§ वेदाङ्ग पारगो विप्रो,—इति स० वी० पुस्तकयोः पाठः।
|| वैकल्यमति,—इति स० वी० पुस्तकयोः पाठः।
¶ सदा च,—इति मु० पुस्तके पाठः।

ततस्तु वैश्य-शूद्रेभ्यः प्रगृह्य वचनं यथा" ॥ इति ।

शूद्र-प्रतिग्रहे विशेषमाहाङ्गिराः,—

"यत्तु राशीकृतं धान्यं खले क्षेत्रे तथा भवेत्* ।

शूद्रादपि ग्रहीतव्यमित्याङ्गिरस-भाषणम्" ॥ इति ।

तत्रैव विशेषान्तरमाह व्यासः,—

"कुटुम्बार्थे तु सत्-शूद्रात् प्रतिग्राह्यमयाचितम् ।

स्वयमात्मने चैव न हि याचेत कर्हिचित्" ॥ इति ।

मनुरपि,—

"न यज्ञार्थं† धनं शूद्रात् विप्रो‡ भिक्षेत धर्म्मवित् ।

यजमानोऽपि भिक्षित्वा चाण्डालः§ प्रेत्य जायते" ॥ इति ।

असत्-प्रतिग्रहोचितोऽवस्था-विशेषः स्कन्द-पुराणे दर्शितः,—

"दुर्भिक्षे दारुणे प्राप्ते कुटुम्बे सीदति क्षुधा ।

असतः प्रतिगृह्णीयात् प्रतिग्रहमतन्त्रितः" ॥ इति ।

याज्ञवल्क्योऽपि,—

"आपद्गतः संप्रगृह्णन् भुञ्जानो वा¶ यतस्ततः ।

न लिप्येतैनसा विप्रो ज्वलनार्क-सम-प्रभः" ॥ इति ।

मनुरपि,—

---

* इति क्षेत्रेऽथवा भवेत्,—इति मु० पुस्तके पाठः ।

† यागार्थं,—इति मु० पुस्तके पाठः ।

‡ द्विजो,—इति मु० पुस्तके पाठः ।

§ चण्डालः,—इति मु० पुस्तके पाठः ।

¶ भुञ्जानोपि,—इति स० सो० पुस्तकयोः पाठः ।

"वृद्धौ च मातापितरौ साध्वी भार्य्या सुतः शिशुः ।
अप्यकार्य्य-शतं कृत्वा भर्त्तव्या मनुरब्रवीत् ॥
जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः ।
आकाशमिव पङ्केन न स पापेन लिप्यते" ॥ इति ।

मार्कण्ड-पुराणे प्रतिग्रहस्य द्रव्यसीमा दर्शिता,—

"यावता पञ्च-यज्ञानां कर्त्तुर्निर्वहणं भवेत्* ।
तावदेव हि गृह्णीयात्† कुटुम्बस्यात्मनस्तथा" ॥ इति ।

व्यासोऽपि,—

"प्रतिग्रह-रुचिर्न स्यात्‡ यात्रार्थन्तु§(१) समाचरेत् ।
स्थित्यर्थादधिकं गृह्णन् ब्राह्मणो यात्यधोगतिम् ॥
(२)वृत्ति-सङ्कोचमन्विच्छेन्नेहेत धन-विस्तरम् ।
धन-लाभे प्रसक्तस्तु ब्राह्मण्यादेव हीयते" ॥ इति ।

अनापदि राज-प्रतिग्रहं निन्दति याज्ञवल्क्यः,—

"न राज्ञः प्रतिगृह्णीयात् लुब्धस्योच्छास्त्र-वर्त्तिनः ।
प्रतिग्रहे सूनि-चक्रि-ध्वजि-वेश्या-नराधिपाः(३) ।

---

* कर्त्तुं नियतं भवेत्,—इति मु० पुस्तके पाठः ।
† तावद्ग्राह्यं सदैव स्यात्,—इति मु० पुस्तके पाठः ।
‡ प्रतिग्रहाद्यावधिः स्यात्,—इति मु० पुस्तके पाठः ।
§ यज्ञार्थन्तु,—इति स० सो० पुस्तकयोः पाठः ।

---

(१) यात्रा जीवनोपायः ।
(२) वृत्तिर्जीवनं ।
(३) सूनी प्राणिघातकः । चक्री तैलिकः । ध्वजी मद्यविक्रेता ।

"बुद्धा हन्त्युभयं* पूर्वान् पूर्वापरेते यथोत्तरम्"। इति।

संवर्तः,—

"राज-प्रतिग्रहो घोरो मध्वास्वादो विषोपमः।

पुत्र-मांसं वरं भोक्तुं न तु राज-प्रतिग्रहः"॥ इति।

स्कान्दे,—

"मरु-देशे निरुदके महा-रण्यसमागतः।

राज-प्रतिग्रहात्पुष्टः पुनर्जन्म न विन्दति॥

ब्राह्मण्यं यः परित्यज्य द्रव्य-लोभेन मोहितः।

विषयामिष-लुब्धस्तु(१) कुर्याद्राज-प्रतिग्रहम्॥

रौरवे नरके घोरे† तस्यैव पतनं ध्रुवम्।

यथा दवाग्निना दग्धाः प्ररोहन्ति वनागमे॥

राज-प्रतिग्रहाद्दग्धा न प्ररोहन्ति कर्हिचित्"। इति।

विष्णु-धर्मोत्तरे,—

"दश-सूनि-समश्चक्री दश-चक्रि-समो ध्वजी।

दश-ध्वजि-समा वेश्या दश-वेश्या-समो नृपः॥

दश सूना-सहस्राणि यो वाहयति सौनिकः(२)।

तेन तुल्यः स्मृतो राजा घोरस्तस्मात् प्रतिग्रहः"॥ इति।

अधार्मिक-राज-विषयेयं निन्दा। तथा च तत्रैव विशेषितम्,—

---

* चतुरस्त्वपि,—इति मु० पुस्तके पाठः।

† नरकेऽतिरौरवेऽघोरे,—इति मु० पुस्तके पाठः।

---

(१) विषयरूपं यदामिषं भोग्यवस्तु, तत्र लुब्धः।

(२) सूना प्राणिवधस्थानं। तत्र नियुक्तः पुरुषः सौनिकः।

"येषां न विषये विप्राः यजन्ति यज्ञ-पतिं हरिम्।
यजन्ते भुञ्जते* तेषामेतत् खलोदितं फलम्।
येषां पापक-सङ्कीर्णं राष्ट्रं न शास्त्रोत्कटम्†॥
एते खला-खलानां दशानां भागिनो नृपाः।
येषां न यज्ञ-पुरुषः कारणं पुरुषोत्तमः॥
ते तु पाप-समाचाराः खला-पापोपभागिनः"‡।

अदुष्टात्तु राज्ञः प्रतिग्रहो न निन्दितः। अतएव छन्दोग-शाखायां प्राचीन-शालादीन्महाशुनीन् राज-प्रतिग्रहे प्रवर्त्तयितुमश्वपति-नामकेन राज्ञा दोषाभाव उपन्यस्तः,—

"न मे स्तेनो जनपदे न कदर्य्यो न मद्यपः।
नानाहिताग्निर्नाविद्वान् न स्वैरी स्वैरिणी(१) तथा"§॥ इति।

याज्ञवल्क्य-वचनेऽपि राज-प्रतिग्रह-निन्दायां¶ "लुब्धस्योच्छास्त्र-वर्त्तिनः"—इति विशेषणाददुष्ट-राज-प्रतिग्रहो न निन्दितः,—इति गम्यते। तथा नारदोऽपि,—

---

* भुञ्जतां,—इति मु० पुस्तके पाठः।
† शास्त्रकारस्थम्,—इति मु० पुस्तके पाठः।
‡ खलापापाहितेकृताः,—इति मु० पुस्तके पाठः।
§ कुतः,—इति स० सो० पुस्तकयोः पाठः।
¶ राजप्रतिग्रहनिन्दाविशेषिता,—इति मु० पुस्तके पाठः।

---

(१) कदर्य्य,—"आत्मानं धर्म्मकृत्यञ्च पुत्रदारांश्च पीडयन्। यो लोभात् सञ्चिनोत्यर्थान् स कदर्य्य इति स्मृतः" इत्युक्तलक्षणः। स्वैरी स्वच्छन्दचारी। स्वैरिणी,—"स्वैरिणी या पतिं हित्वा कामतोऽन्यं समाश्रयेत्"—इत्युक्तलक्षणा।

"श्रेयान् प्रतिग्रहो राज्ञां नान्येषां ब्राह्मणादृते।
ब्राह्मणश्चैव राजा च द्वावप्येतौ धृत-व्रतौ॥
नैतयोरन्तरं किञ्चित् प्रजा-धर्माभिरक्षणे*।
शुचीनामशुचीनाञ्च सन्निवेशो† यथाम्भसाम्॥
समुद्रे समतां यान्ति तद्वद्राज्ञां(१) धनागमः।
यथाऽग्नौ संस्थितस्यैव शुद्धिमायाति काञ्चनम्॥
एवं धनागमाः सर्वे शुद्धिमायान्ति राजनि"। इति।

दुष्ट-प्रतिग्रहवत्‡ सत्प्रतिग्रहस्यापि§ पापहेतुता कुतो न कल्प्यते,—इति चेत्। न,¶ ब्रह्माण्ड-पुराणे सत्प्रतिग्रहस्यापद्यपि विहितत्वात्।

"अनापद्यपि धर्मेण वाञ्छतः श्रियमात्मना।
गृह्णन् प्रतिग्रहं विप्रो न धर्मात् परिहीयते॥
प्रतीयाद् ब्राह्मणादेव नित्यमाचार-वर्त्तिनः।
अन्यथा विमलं द्रव्यं तथा धर्मान्न हीयते"—इति।

केषु चिद्दत्त-विशेषेषु यथाचितेषु न प्रतिग्रह-दोषः,—इत्याह भरद्वाजः,—

* प्रजाधर्माभिरक्षणम्,—इति मु० पुस्तके पाठः।
† सन्निपातो,—इति मु० पुस्तके पाठः।
‡ दुष्प्रतिग्रहवत्,—इति स० शो० आ० पुस्तकेषु पाठः।
§ अपि शब्दो नास्ति मु० पुस्तके।
¶ तन्न,—इति स० शो० पुस्तकयोः पाठः।

(१) राज्ञामिति द्वैविध्ये षष्ठी।

"अयाचितोपपन्नेषु नास्ति दोषः प्रतिग्रहे।
अमृतं तद्विदुः* र्देवास्तस्मात्तन्नैव निर्णुदेत्"॥ इति।

तत्र प्रकाराभिप्रेतान् वस्तु-विशेषान्निर्दिशति याज्ञवल्क्यः,—

"कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः।
मांसं शय्याऽऽसनं धानाः† प्रत्याख्येयं न वारि च॥
अयाचिताहृतं ग्राह्यमपि दुष्कृत-कर्मणः।
अन्यत्र कुलटा-षण्ढ-पतितेभ्यस्तथा द्विषः"॥ इति।

मनुरपि,—

"शय्यां गृहान् कुशान् गन्धानपः पुष्पं मणिं दधि।
मत्स्यान् धानाः पयो मांसं शाकं चैव न निर्णुदेत्॥
एधोदकं मूल-फलं अन्नमभ्युद्यतञ्च यत्।
सर्वतः प्रतिगृह्णीयान्मध्वथाभय-दक्षिणाम्"—इति।

प्रतिग्रहानधिकारिणं स एवाह,—

"हिरण्यं भूमिमश्वं गामन्नं वासस्तिलान् घृतम्।
अविद्वान् प्रतिगृह्णानो भस्मीभवति काष्ठवत्"—इति।

याज्ञवल्क्योऽपि,—

"विद्या-तपोभ्यां हीनेन नतु ग्राह्यः प्रतिग्रहः।
गृह्णन् प्रदातारमधो नयत्यात्मानमेव च"॥ इति।

विदुषस्तु न कोऽपि प्रतिग्रहो दोषावह इति वाजसनेयि-ब्राह्मणे

* तं विदुः,—इति मु० पुस्तके पाठः।
† धान्यं,—इति मु० पुस्तके पाठः।

गायत्री-विद्यायां श्रूयते,—"यदि ह वा अप्येवं विद्वान् द्विजः* प्रतिगृह्णाति बहु† तद्गायत्र्या एकं पदं प्रतिग्रहाय इमां त्रीन् लोकान् पूर्णान् प्रतिगृह्णीयात् सोऽस्या एतत्प्रथमं पदमाप्नुयात् यावतीयन्त्रयीविद्याय तावत् प्रतिगृह्णीयात् सोऽस्या एतद्द्वितीयं पदमाप्नुयात् यावदिदं प्राणियुक्तावत् प्रतिगृह्णीयात् सोऽस्या एतत् तृतीयं पदमाप्नुयादस्या एतदेव तुरीयं दर्शितं पदं परोरजा य एष तपति नैव केन चाप्यं कुत एतावत् प्रतिगृह्णीयात्‡"—इति।

॥०॥ इति प्रतिग्रहप्रकरणम् ॥०॥

एवं निरूपितानामध्यापनादीनां प्रतिग्रहान्तानां शब्दान्तराधिकरण-न्यायेन (मी॰ २अ॰ २पा॰ १अ॰) कर्म-भेदमभिप्रेत्य 'षट्कर्माभिरतः'—इत्युक्तम्। स च न्याय इत्थं प्रवर्त्तते। यजति ददाति जुहोतीत्युदाहरणम्। तत्र संशयः, किं सर्व-धात्वर्थानुगतैका भावना[1] उत प्रतिधात्वर्थं नाना§? । तत्र, भावना-वाचकस्याख्यातस्यैकत्वात्त्रयाणामपि धात्वर्थानामुपसर्जनत्वेन प्रधान-भेदकत्वाभावादेकैव भावनेति पूर्व्वपक्षः। धात्वर्थानुरञ्जनप्रकारेण केवलाख्यातेन भावनाया अप्रतीतेः उत्पत्ति-शिष्ट-धात्वर्थेनैकेनानुरक्ते आख्यातार्थे

* अपि विद्,—इति स॰ से॰ पुस्तकयोः पाठः।

† नैव,—इति स॰ से॰ मा॰ पुस्तकेषु पाठः।

‡ अथास्या एतदस्य प्रतिगृह्णीयात्,—इत्यधिकः पाठोऽस्ति॰ स॰ से॰ मा॰ पुस्तकेषु।

§ भिन्ना,—इति मु॰ पुस्तके पाठः।

(१) भावना व्याख्यातार्थः। स च प्रयत्नो व्यापारो वा।

धात्वर्थान्तराणामननुप्रवेशात् प्रतिधात्वर्थं भावना-भेदः,—इति सि-द्धान्तः। एवं चाध्यापनादिभिः षड्भिर्धात्वर्थैः षोढ़ा भावना भिद्यते,—इति भवन्त्येतानि षट् कर्माणि। तेषु 'अभिरतिः' श्रद्धा-पूर्वकमनु-ष्ठानम्। अश्रद्धयाऽनुष्ठितमप्यफलं स्यात्। तदाह भगवान्,—

"अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत्।
असदित्युच्यते पार्थ, न च तत् प्रेत्य नो इह"॥ इति।

'नित्यम्'—इत्युत्तरत्रान्वेति न पूर्वत्र, अध्यापनादीनां त्रयाणा-मनित्यत्वात्। देवता च अतिथिश्च देवतातिथी, तयोः प्रतिदिनं पूजको भवेत्। देवता-स्वरूपञ्च वाजसनेयि-ब्राह्मणे, शाकल्य-याज्ञ-वल्क्य-संवादे विचार्य्य निर्णीतम्। तत्र, शाकल्यः प्रष्टा, याज्ञवल्क्यो वक्ता, देवता-विस्तार-सङ्क्षेपौ स्वरूपञ्च* प्रष्टव्योऽर्थः। तत्र चैषा श्रुतिः। "अथ हैनं विदग्धः शाकल्यः पप्रच्छ; कति देवा याज्ञवल्क्येति। स हैतयैव निविदा प्रतिपेदे; यावन्तो वैश्वदेवस्य निविद्युच्यन्ते, त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति। ओमिति होवाच; कत्येव देवा याज्ञवल्क्येति, त्रयस्त्रिंशदिति। ओमिति होवाच; कत्येव देवा याज्ञवल्क्येति, षडिति। ओमिति होवाच; कत्येव देवा याज्ञ-वल्क्येति, त्रय इति। ओमिति होवाच; कत्येव तु देवा याज्ञवल्क्येति, द्वाविति। ओमिति होवाच; कत्येव देवा याज्ञवल्क्येत्यध्यर्द्ध इति। ओमिति होवाच; कत्येव देवा याज्ञवल्क्येत्येक इति। ओमिति होवाच; कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति। स

* विस्तारसंक्षेपौ च,—इति मु० पुस्तके पाठः।

होवाच; महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव* देवा इति। कतमे ते त्रयस्त्रिंशदित्यष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एक-त्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशा इति। कतमे ते वसव इति, अग्निश्च पृथिवी च वायुश्चान्तरीक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदं सर्वं वसु हितमेते हीदं सर्वं वासयन्त तस्माद्वसव इति। कतमे ते रुद्रा इति, दश वै पुरुषे प्राणा आत्मैकादशस्ते यदाऽस्माच्छरीरादुत्क्रामन्त्यथ रोदयन्ति† यस्माद्रोदयन्ति‡ तस्माद्रुद्रा इति। कतम आदित्या इति, द्वादश एव मासाः§ संवत्सरस्यैत आदित्या एते हीदं सर्वमाददाना यन्ति तद्यदिदं सर्वमाददाना यन्ति‖ तस्मादादित्या इति। कतम इन्द्रः कतमः प्रजापतिरिति, स्तनयित्नु¶ रेवेन्द्रो यज्ञः प्रजापतिरिति। कतमः स्तनयित्नुरित्यशनिरिति। कतमो यज्ञ इति, पशव इति। कतमे षडित्यग्निश्च पृथिवी च वायुश्चान्तरीक्षं चादित्यश्च द्यौश्चैते षडेते** हीदं सर्वं षडिति। कतमे ते†† त्रयो देवा इति इम एव त्रयो लोका एषु हीमे सर्वे देवा इति। कतमौ तौ द्वौ देवावित्यन्नं चैव प्राणश्चेति। कतमोऽध्यर्द्ध इति योऽयं पवत इति

---

* त्रयस्त्रिंशत्त्वेव,—इति क० घ० पुस्तकयोः पाठः।

† ते यदस्माच्छरीरान्मर्त्यादुत्क्रामन्ति,—इत्यादि पाठः ख० पुस्तके।

‡ यद्रोदयन्ति,—इति ख० पुस्तके पाठः।

§ द्वादशमासाः,—इति क० घ० पुस्तकयोः पाठः।

‖ तद्यदिदं सर्वमाददाना यन्ति,—इति नास्ति ख० पुस्तके।

¶ स्तनयित्नु,—इति ख० पुस्तके पाठः। एवं परत्र।

** षडिमे,—इति क० घ० पुस्तकयोः पाठः।

†† ते इति नास्ति ख० पुस्तके।

तदाहुर्यद्ययमेक एव* पवते अथ कथमध्यर्द्ध इति। यदस्मिन्निदं सर्व्वमध्यार्ध्नोत्तेनाध्यर्द्ध इति। कतम एको देव इति, प्राण इति स ब्रह्म-त्यदित्याचक्षते"—इति। अस्याः श्रुतेरयमर्थः। उपासनार्हाणां देवानां संख्यादि-विचारे पृष्टः† शाकल्येन याज्ञवल्क्यो विजिगीषु-कथायां(१) महत्त्वात् पर-बुद्धि-व्यामोहाय निविदा प्रत्युत्तरं प्रतिपेदे। निविच्छब्दो वैश्वदेव-नामके(२) शस्त्र-विशेषेऽवस्थितानां‡ संख्या-वाचिनां पदानां समुदायमाचष्टे,—इति वैदिक-प्रसिद्धिः। ततो यावन्तो देवा वैश्वदेवस्य निविद्युच्यन्ते, तावन्त उपास्याः,—इत्युक्तं भवति। तानि च पदानि, त्रयश्च त्रीचेत्यादीनि§। शत-त्रयं सहस्र-त्रयं षट्कश्च देव-विस्तारः। कत्येवेत्येवकारेण तत्र तत्र देवान्तर-संख्या पृच्छ्यते। यएव देवाः पूर्व्वं विस्तृताः, तएव संक्षेपेण कियन्त इति तत्र तत्र|| प्रश्नार्थः। कतीति संख्या-प्रश्नः, कतमे ते इति स्वरूप-विशेष-प्रश्नः। तत्र शत-सहस्रसंख्या¶ ये देवा उक्ता ते सर्व्वे प्रधानभूता न भवन्ति, किन्तर्हि, प्राधान्येन हविर्भुजां त्रयस्त्रिंशद्देवानां योग-महिमा लौकिकसौभिक** विभूतयएव, ततो न तेषां स्वरूप-विशेषः पृथक् निरूपणीयः इति††।

* यदयमेकइव,—इति मु० पुस्तके पाठः।

† संख्याविस्तारेण कतीतिपृष्टो,—इति स० सो० पुस्तकयोः पाठः।

‡ स्थितानां,—इति मु० पुस्तके पाठः।

§ त्रयश्च त्रिंशदित्येवमादीनि,—इति मु० पुस्तके पाठः।

|| तत्र,—इति मु० पुस्तके पाठः।

¶ शतसहस्रसंख्या,—इति स० सो० पुस्तकयोः पाठः।

** लौकिक भौतिक, इति स० सो० मा० पुस्तकेषु पाठः।

†† 'इति' शब्दो नास्ति स० सो० पुस्तकयोः।

(१) विजिगीषु कथा अन्यः वितण्डा तु। तिस्रः किल कथा भवन्ति वादो जल्पो वितण्डा च। सर्व्वमिदं न्याये प्रथमद्वितीये स्पष्टम्।

(२) अपमीतमन्त्राख्या श्रुतिः द्रष्टव्यम्।

साक्षी, प्रकृत-मन्त्र-विचारं पुरुषं प्रति मन्त्रस्य ज्ञानैक-समधिगम्य-त्वात् परोक्षम्,—इति। तत्र, प्राक-शब्द-वाच्यः परमात्मैवैको-मुख्योदेवः। तत्-स्वरूपञ्च श्वेताश्वतरा विस्पष्टमामनन्ति,—

"एकोदेवः सर्व्व-भूतेषु गूढः
सर्व्वव्यापी सर्व्वभूतान्तरात्मा।
कर्म्माध्यक्षः सर्व्वभूताधिवासः
साक्षीचेता* केवलोनिर्गुणश्च" ॥ इति।

एतमेव देवं शास्त्र-कुशलास्तैस्तैः शब्द-विशेषैर्बहुधा व्यवहरन्ति। तथा च मन्त्र-वर्णः†—

"सुपर्णं विप्राः कवयोवचोभि-
रेकं सन्तं बहुधा कल्पयन्ति"—इति।

तेच शब्द-विशेषा विस्पष्टमन्यस्मिन्मन्त्रे श्रूयन्ते,—

"इन्द्रमित्रं वरुणमग्निमाहु-
रथोदिव्यः स सुपर्णोगरुत्मान्।
एकं सद्विप्राबहुधावद-
न्त्यग्निं यमं मातरिश्वानमाहुः"—इति।

ननु, इन्द्र-मित्र-वरुणादयः शब्दा भिन्नदेव-वाचिनो नानेकं देवमभिदधति, अन्यथा वायव्यायामैन्द्रमन्त्रः प्रयुज्येत। नायं दोषः, एकत्वेऽपि देवस्य मूर्त्ति-भेदेन मन्त्र-व्यवस्थोपपत्तेः।

---

* चेता,—इति स॰ से॰ पुस्तकयोः पाठः।
† मन्त्र—इति मु॰ पुस्तके पाठः।
‡ सर्व्वगतेषु,—इति मु॰ पुस्तके पाठः।

यथा, शैवागमेषु शिवस्यैकत्वेऽपि प्रतिमा-भेदेन* दक्षिणामूर्त्ति-चिन्ता-मणि-मृत्युञ्जयादयोमन्त्रामूर्त्ति-विशेषेषु व्यवस्थिताः; यथा वा, वैष्णवागमेषु गोपाल-वामनादयोमन्त्राः, तथा वेदेऽपि† किं न स्यात्। ननु, द्रव्य-देवते यागस्य स्वरूपं, स्वरूप-भेदाच्च कर्म्म-भेदः प्रतिपादितः,—"तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्"—इत्यत्र; यथाऽऽमिक्षा-वाजिनयोर्द्रव्ययोर्भेदस्तथा विश्वेषां देवानां वाजिभ्योदेवेभ्यो भेदोऽभ्युपगन्तव्यः,—इति‡। बाढं, अभ्युपगम्यते ह्येकस्यैव वासवस्य देवस्य कर्म्मानुष्ठान-दशायामौपाधिकोभेदः। अतएव, वाजसनेयि-ब्राह्मणे इष्टि-प्रकरणे कर्म्मानुष्ठाने§ प्रसिद्धं देव-भेदमनूद्य तदपवादेन‖ वास्तवं दैवैकत्वमवधारितम्,—"तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष उ ह्येव¶ सर्व्वे देवाः,—इति। न चैकस्माद्देवात् फल-भेदोदुःसम्पादः,—इति मन्तव्यम्, उपास्ति-प्रकार-भेदेन तदुपपत्तेः। "तं यथा यथोपासते, तदेव भवति"—इति श्रुतेः। यथैकोऽपि राजा छत्र-चामरादि-सेवा-प्रकार-भेदेन फल-भेदे हेतुस्तद्वत्। ननु, देवः फलं ददातीत्येतन्मीमांसको न सहते। तथाहि नवमाध्याये विचारितम्,— किं यागेनाराधिताया देवतायाः फलं, उतापूर्व्व-द्वारकं यागस्य

---

* प्रतिमाप्रासादभेदेन,—इति मु० पुस्तके पाठः।
† देवेऽपि,—इति स० सो० पुस्तकयोः पाठः।
‡ 'इति' शब्दो नास्ति मु० पुस्तके।
§ कर्म्मानुष्ठाने,—इति मु० पुस्तके पाठः।
‖ तदनुवादेन,—इति स० सो० पुस्तकयोः पाठः।
¶ एवह्येव,—इति मु० पुस्तके पाठः।

फल-साधनत्वमिति संशयः। तत्र* अङ्गुरस्य यागस्य कालान्तर-भावि-फलं प्रति साधनत्वायोगाद्देवताद्वारं(१) किञ्चित् कल्पनीयम्। देवता-प्रसादस्य श्रुति-युक्तिभ्यां द्वारं स्यात्†। "इन्द्रश्चैनमिष्टः प्रजया पशुभिस्तर्पयति"—इति श्रुतिः। युक्तिरप्युच्यते,—क्रियया आप्तुमिष्ट-तमत्वात्‡ कर्म्म कारकं प्रधानं, तेन कर्म्मणा व्याप्तत्वात् सम्प्रदानं ततोऽपि प्रधानं, इन्द्रादि-देवताः§ च सम्प्रदानत्वेन प्राधान्यात् पूजामर्हन्ति, यागस्य पूजारूपत्वादतिथिभोजनमिव‖ देवताया यज्ञं स्यात्। तस्मादाराधितदेवः फलं ददातीति पूर्व्वः पक्षः। अत्रोच्यते। यागदेवतयोर्योऽयमङ्गाङ्गिभाव उपन्यस्तः, स तु शब्दाकाङ्क्षानुसारेण विपर्य्येति। तथा हि, यजेतेत्याख्यातेन(२) भावनाऽभिधीयते। सा च, किं केन कथमिति भाव्य-करणेतिकर्त्तव्यता-लक्षणमंश-त्रयं क्रमेणाकाङ्क्षति। तत्र, यागस्य समान-पदोपनीतत्वेऽप्ययोग्यत्वान्न भाव्यता। स्वर्गस्य तु वाक्यादुपनीतस्यापि¶ पुरुषार्थत्वेन योग्यत्वात् भाव्यता स्यात्। तस्य च स्वर्गस्य साधनाकाङ्क्षायां यागः करण-

---

* अथ,—इति स० सो० प्रा० पुस्तकेषु पाठः।

† द्वारं स्यात्,—इति मु० पुस्तके पाठः।

‡ कर्त्तुः क्रियया व्याप्तुमिष्टतमत्वात्,—इति मु० पुस्तके पाठः।

§ स० सो० प्रा० पुस्तकेषु [illegible]पाठः। इदं मतम्।

‖ यागस्य पूजारूपत्वादतिथिभोजनमिव,—इति मु० पुस्तके पाठः।

¶ वाक्यादुपनीतस्यापि,—इति मु० पुस्तके पाठः।

---

(१) द्वारं [illegible] व्यापारः।

(२) भावना च भावयितुर्व्यापारः प्रयत्नो वा।

स्वर्गं हन्ति, तत्कथं फल-दानम्। तस्माद्विग्रहादिमतां देवानां*म-
भावाच्च देवता-प्रसादो यागस्य फल-दानम्। किन्तु, श्रूयमाण-
फलसाधनत्वान्यथानुपपत्ति-कल्प्यमपूर्वं तद्द्वारम्। अभ्युपगतेऽपि
देवेऽपूर्वस्यैव फल-दातृत्वमवश्यं वाच्यं, मन्त्रार्थवादेतिहास-पुरा-
णेषु देवानामपि तपश्चरण-कृतानुष्ठान-अश्वमेधादि-मन्त्र-प्रयोगेभ्यः
समीहित-सिद्ध्यनुकीर्त्तनात्। तस्माच्च देवः फल-प्रदः—इति सिद्धम्।
(१)औपनिषदास्त्वीश्वरस्य फल-दातृत्वं मन्यन्ते। तथाहि, तदीये शास्त्रे(२)
तृतीयाध्याये विचारितम्। किं धर्म्मः फलं ददाति, आहोस्विदीश्वरः,—
इति संशयः। तत्र, मीमांसकोक्त-न्यायेन धर्म्मः फल-प्रदः,—इति पूर्व्वः
पक्षः। सिद्धान्तस्तु, किं धर्म्मोऽन्यानधिष्ठितएव फल-प्रदः, किं वा,
केनचिच्चेतनेनाधिष्ठितः? नाद्यः, अचेतनस्य तारतम्यानभिज्ञस्य
यथोचित-फल-दातृत्वायोगात्। द्वितीये तु, येनाधिष्ठितः, सएव
फल-दाताऽस्तु†। न चैवं धर्म्मस्य वैयर्थ्यमिति शङ्कनीयं, वैषम्य-नैर्घृण्य-
परिहाराय धर्म्मापेक्षणात्। असति तु धर्म्मे, कांश्चिदुत्तमं सुखं,
कांश्चिन्मध्यमं, कांश्चिदधमं, प्रापयन्नीश्वरः, कथं विषमो न भवेत्।
कथं वा त्रिविधं‡ दुःखं प्रापयन्निर्घृणो न भवेत्। धर्म्माधर्म्मानुसारेण
तत्-प्रापणे गुरु-पितृ-राजादीनामिव न वैषम्य-नैर्घृण्ये प्राप्नुतः।

---

* देवादीनां,...इति सु० पुस्तके पाठः।

† फलं ददातु,—इति सु० पुस्तके पाठः।

‡ विधं,—इति सु० पुस्तके पाठः।

---

(१) औपनिषदा वेदान्तिनः।

(२) शारीरके।

"यो मोहादथवाऽऽलस्यादकृत्वा देवतार्च्चनम् ।
भुङ्क्ते, स याति नरकं शूकरेष्वभिजायते ॥
तस्मात् देव-पूजाञ्च महायज्ञान् द्विजोत्तमः ।
कुर्वीत चेन्मूढात्मा तिर्य्यग्योनिं स गच्छति(१)"—इति ।

मार्कण्डेयः,—
"अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते ।
स तस्य दुष्कृतं दत्वा पुण्यमादाय गच्छति" ॥

देवलोऽपि,—
"अतिथिर्गेहमभ्येत्य यस्य प्रतिनिवर्त्तते ।
अपूजितो निराशश्च स सद्यो हन्ति तत्कुलम्"—इति ।

पूजायान्तु न केवलमप्रत्यवायाभावः* किन्त्वभ्युदयोऽप्यस्ति ।
तथा च विष्णुधर्म्मोत्तरे,—
"येऽर्च्चयन्ति सदा विष्णुं शङ्ख-चक्र-गदा-धरम् ।
सर्व्व-पाप-विनिर्म्मुक्ता ब्रह्माणं प्रविशन्ति ते"—इति ।

कूर्म्मपुराणे—
"वेदाभ्यासोऽन्वहं शक्त्या महायज्ञ-क्रियाक्षमा(२) ।

---

* न केवलं पापाभावः,—इति स० सो० पुस्तकयोः पाठः ।

---

(१) 'न' शब्दस्य विपर्य्यासात् 'न मूढात्मा'—इति, 'स तिर्य्यग्योनिं गच्छति'—इति च वाक्यद्वयमत्र मन्तव्यम् ।

(२) 'अध्ययनं, ब्रह्मयज्ञ'—इत्युक्तेरध्ययनमेव महायज्ञान्तर्गतं वेदाभ्यासस्तु ततः पृथक् । अथवा, वेदाभ्यासस्य महायज्ञान्तर्गतत्वेऽपि पृथगुपन्यासो गौरवख्यापनात् । तथा च महायज्ञपदं वेदाभ्यासेतर-महायज्ञ-परमिति चिन्त्यते ।

नाशयन्त्याशु पापानि देवानामर्चनं तथा"—इति ।

मनुरपि—

"अतिथिं पूजयेद्यस्तु श्रान्तं चादृष्टमागतम्* ।
अब्दं गो-शतं तेन दत्तं स्यादिति मे मतिः"—इति ॥

विष्णुरपि—

"स्वाध्यायेनाग्निहोत्रेण यज्ञेन तपसा तथा ।
नावाप्नोति गृही लोकान् यथा त्वतिथि-पूजनात्"—इति ।

वैश्वदेवार्थमोदनं पाचयित्वा तेन होमे कृते सति योऽवशिष्ट-ओदनः स 'हुत-शेषः' । तमेव भुञ्जीत, न तु स्व-भोजनार्थं पाचयेत् । यदाह भगवान्,—

"यज्ञ-शिष्टाशिनः सन्तो मुच्यन्ते सर्व्व-किल्बिषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्म-कारणात्"—इति ।

'हुत-शेषम्'—इत्यत्र हुत-शब्दो महाभारते व्याख्यातः,—

"वैश्वदेवादयो होमा हुतमित्युच्यते बुधैः"—इति ।

तस्य शेषो हुत-शेषः । स च हुत-शेष-शब्दो देवर्षि-मनुष्यादि-पूजोपयुक्तावशिष्टमुपलक्षयति । तदाह मनुः,—

"देवानृषीन् मनुष्यांश्च पितॄन् गृह्याश्च देवताः ।
पूजयित्वा ततः पश्चाद्गृहस्थः शेषभुग्भवेत् ।
अघं स केवलं भुङ्क्ते यः पचत्यात्म-कारणात् ।
यज्ञशिष्टाशनं ह्येतत् सतामन्नं विधीयते"—इति ।

---

* श्रान्तं वा दृश्यमानकम्,—इति स० से० शा० पुस्तकेषु पाठः ।

'ब्राह्मणोऽनाश्रमीदिति'—इत्यत्र विवक्षितस्य ब्राह्मणस्य लक्षणं महाभारते दर्शितम्,—

"सत्यं दानं तपः शौचमानृशंस्यं दमो घृणा ।
दृश्यन्ते यत्र विप्रेन्द्र, स ब्राह्मण इति स्मृतः ॥
जितेन्द्रियो धर्म-परः स्वाध्याय-निरतः शुचिः ।
काम-क्रोधौ वशौ यस्य तं देवा ब्राह्मणं विदुः ॥
यस्य चात्म-समो लोको धर्मज्ञस्य मनस्विनः ।
स्वयं धर्मेण चरति* तं देवा ब्राह्मणं विदुः ॥
योऽध्यापयेदधीते वा याजयेद्वा यजेत वा ।
दद्याद्वाऽपि यथाशक्ति तं देवा ब्राह्मणं विदुः ॥
क्षमा दया च विज्ञानं सत्यं चैव दमः शमः ।
अध्यात्मनिरतिर्ज्ञान† मेतद्ब्राह्मण-लक्षणम्"—इति ॥

तथाच, अनाहिताग्निकानामपि तल्लक्षण-लक्षितो ब्राह्मणोऽनाश्रमी सीदतीति वाक्यार्थः पर्यवसितो भवति‡ ।

'चतुर्णामपि वर्णानाम्,'—इति, 'षट्कर्माभिरतः'—इति वचनद्वयेन साधारणासाधारण-धर्मौ संक्षिप्योपदर्शितौ । यद्यप्यध्यापनादित्रयमेव विप्रस्यासाधारणं नाध्ययनादि-त्रयं तस्य वर्ण-त्रय-साधारणत्वात्, तथापि षट्कर्माभिरतत्वं विप्रस्यैवेति न कोऽपि विरोधः ॥

---

* सर्वकर्मैव चरितं,—इति स० सो० पुस्तकयोः पाठः ।
† अध्यात्मनिरतं ज्ञान,—इति स० सो० पुस्तकयोः पाठः ।
‡ 'तथाच'—इत्यादि, 'भवति'—इत्यन्तः पाठो नास्ति स० सो० पुस्तकयोः ।

अथात्र* साधारणाचरणादिप्रसङ्गेन बुद्धिस्थं साधारणमाह्निकं संक्षिपति,—

सन्ध्या स्नानं जपो होमो देवतानाञ्च पूजनम् ॥३८॥
आतिथ्यं वैश्वदेवञ्च† षट् कर्माणि दिने दिने ॥

इति। 'सन्ध्यास्नानम्'—इत्यत्र यवागू-पाक-न्यायेन स्नानस्य प्राथम्यं द्रष्टव्यम्‡। स च न्यायः पञ्चमाध्याये प्रथमपादे प्रतिपादितः। 'यवाग्वाऽग्निहोत्रं जुहोति§ यवागूं पचति'—इति श्रूयते। तत्र|| संशयः; किमग्निहोत्र-यवागूपाकयोरनियतः क्रमः, उत नियतः, यदा नियतः, तदा¶ पाठेन नियम्यते उतार्थेन। तत्र विध्योरनुष्ठानमात्र-पर्यवसानात् क्रमस्य नियामकाभावात्** अनियतः,—इत्येकः पूर्वः पक्षः। पूर्वाधिकरणेषु "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति"—इत्यत्र†† पाठस्य‡‡ नियामकत्वाभ्युपगमादत्रापि तथाऽवस्थापाठक-

---

* तत्र,—इति स० सो० पुस्तकयोः पाठः।

† सन्ध्यास्नानं जपो होमः स्वाध्यायो देवतार्चनम्। वैश्वदेवातिथेयञ्च इति [illegible] पाठः मु० मू० पुस्तके।

‡ प्राथम्यमास्थेयम्,—इति मु० पुस्तके पाठः।

§ अग्निहोत्रं जुहोति,—इति मु० पुस्तके पाठः।

|| तत्र,—इति नास्ति मु० पुस्तके।

¶ तथापि,—इति स० सो० पुस्तकयोः पाठः।

** नियामकत्वाभावात्,—इति मु० पुस्तके पाठः।

†† तत्र,—इति मु० पुस्तके पाठः।

‡‡ पाठक्रमस्य,—इति मु० पुस्तके पाठः।

क्रमनियमः*,—इत्यपरः पूर्वपक्षः†। 'यवाग्वा'—इति तृतीयाश्रुत्या(१) होम-साधनत्वावगमाद्भवति च द्रव्ये होमाभिव्यक्त्योरर्थात् यवागू-पाकः पूर्वभावी,—इति सिद्धान्तः। एवमत्रापि‡ स्नानस्य शुद्धि-हेतुत्वा-च्छुद्धस्यैव सन्ध्या-वन्दनाधिकारित्वात् स्नानं पूर्वभावि,—इति द्रष्टव्यम्(२)। तच्च§, स्नानं तत्पूर्व-भाविनां ब्राह्ममुहूर्त्तोत्थान-हित-चिन्तनादीनां सर्वेषामुपलक्षणम्। तत्र याज्ञवल्क्यः,—

"ब्राह्मे मुहूर्त्ते उत्थाय चिन्तयेदात्मनो हितम्।
धर्मार्थकामान् स्वे काले यथाशक्ति न हापयेत्"—इति।

मनुरपि,—

"ब्राह्मे मुहूर्त्ते बुध्येत धर्म्मार्थावनुचिन्तयेत्।
काय-क्लेशांश्च तन्मूलान् वेद-तत्त्वार्थमेव च"—इति।

---

* यथापाठं क्रमनियमः,—इति पाठो भवितुं युक्तः।
† पूर्व्वः पक्षः,—इति मु० पुस्तके पाठः।
‡ अतएवमत्रापि,—इति मु० पुस्तके पाठः।
§ तच्च,—इति मु० पुस्तके पाठः।

---

(१) तथा चोक्तम्। "श्रुति र्द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि। सा प्रक्रिया या कथमित्यपेक्षा स्थानं क्रमो योगबलं समाख्या"—इति। द्वितीयापदं कारकविभक्त्युपलक्षणं सर्व्वासामेव कारकविभक्तीनां प्रकृत्यर्थान्वितस्वार्थबोधनेऽन्यानपेक्षत्वस्य तुल्य-त्वात्—इति वाचस्पतिमिश्राः। उदाहरणान्येषां मीमांसा-तृतीये द्रष्टव्यानि।

(२) तथा चार्थक्रमाद्गुणकालनिविभागः। क्रमश्च षड्विधः, "श्रुत्यर्थपाठ-स्थानमुख्यप्रावर्त्तिकाः क्रमाः"—इत्युक्तेः। उदाहरणानि चैषां मीमां-सापञ्चमाध्याये द्रष्टव्यानि।

वेदतत्त्वार्थः परमात्मा। तथा च कूर्मपुराणे*,—

"ब्राह्मे मुहूर्ते उत्थाय धर्ममर्थञ्च चिन्तयेत्।
कायक्लेशं तदुद्भूतं ध्यायीत मनसेश्वरम्"—इति।

विष्णुपुराणेऽपि,—

"ब्राह्मे मुहूर्ते उत्थाय मानसे मतिमान्नृप।
विबुद्ध्य चिन्तयेद्धर्ममर्थं चाप्यविरोधिनम्†(१)॥
अपीडया तयोः काममुभयोरपि चिन्तयेत्।
परित्यजेदर्थ-कामौ धर्म-पीड़ा-करौ नृप॥
धर्ममप्यसुखोदर्कं लोक-विद्विष्टमेव च"—इति।

सूर्योदयात् प्रागर्द्धप्रहरे द्वौ मुहूर्तौ, तत्राद्यो ब्राह्मो द्वितीयो रौद्रः। तत्र ब्राह्मे चिन्तनीयार्थविशेषं दर्शयति विष्णुः,—

"उत्थायोत्थाय बोद्धव्यं किमद्य सुकृतं कृतम्।
दत्तं वा दापितं वाऽपि‡ वाक् सत्या चापि भाषिता॥
उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम्।
मरण-व्याधि-शोकानां किमद्य निपतिष्यति"—इति।

'ध्यायीत मनसेश्वरम्' इति यदुक्तं, तत्र प्रकार-विशेषो वामनपुराणे,

---

* मनुरपि,—इत्यारभ्य कूर्मपुराणे इत्यन्तो ग्रन्थः स० सो० पुस्तकयोर्नास्ति।

† अर्थञ्चाप्य विरोधिनं,—इति मु० पुस्तके पाठः। अर्थमप्यविरोधिनम्,—इति स० पुस्तके।

‡ दत्तं वापि कृतं वापि,—इति मु० पुस्तके पाठः।

---

(१) ब्राह्मे मुहूर्ते विबुध्य उत्थाय धर्मं यथोक्तप्रकारकमर्थञ्च मानसे चिन्तयेदिति सम्बन्धः।

"ब्रह्मा मुरारिस्त्रिपुरान्त-कारी*
भानुः शशी भूमि-सुतो बुधश्च।
गुरुश्च शुक्रः सह भानुजेन
कुर्व्वन्तु सर्व्वे मम सुप्रभातम्"—इत्यादि।

॥०॥ इति ब्राह्मे मुहूर्त्ते आत्म-हित-चिन्तन-प्रकरणम् ॥०॥

हित-चिन्तनानन्तरं श्रोत्रियादिकमवलोकयेत्, न तु पापिष्ठादिकम्†। तदाह‡ कात्यायनः,—

"श्रोत्रियं सुभगां गाञ्च अग्निमग्निचितं तथा।
प्रातरुत्थाय यः पश्येदापद्भ्यः स प्रमुच्यते॥
पापिष्ठं दुर्भगं मद्यं§ नग्नमुत्कृत्त-नासिकम्।
प्रातरुत्थाय यः पश्येत्तत्कलेरुपलक्षणम्"—इति।

ततो मूत्र-पुरीषे कुर्य्यात्। तदाहाङ्गिराः,—

"उत्थाय पश्चिमे यामे रात्रेस्तत आचम्य चोदकम्।
अन्तर्द्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा॥
वाचं नियम्य यत्नेन ष्ठीवनोच्छ्वास-वर्ज्जितः‖।
कुर्य्यान्मूत्र-पुरीषे तु शुचौ देशे समाहितः"—इति।

तत्र, शौच-नियमान् विविनक्ति,—

---

* त्रिपुरान्तकोऽपि—इति मु० पुस्तके पाठः।
† पापिष्ठम्()—इति स० सो० पुस्तकयोः पाठः।
‡ नास्तीदं मु० पुस्तके
§ मार्ज्जं,—इति स० सो० पुस्तकयोः पाठः।
‖ ष्ठीवनोच्छ्वासवर्ज्जितः,—इति मु० पुस्तके पाठः।

साधनं, तथापि युद्धमरणस्यात्यल्पकालसाध्यत्वेन वैकल्याभावा-दुत्तमसाधनत्वमित्याह,

यं यज्ञसङ्घैस्तपसा च विप्राः
स्वर्गैषिणो वाऽत्र यथैव यान्ति ।
क्षणेन यान्त्येव हि तत्र वीराः
प्राणान् सुयुद्धेन परित्यजन्तः ॥ ३६ ॥ इति ।

विप्रशब्देन निष्कामा विवक्षिताः। तथा च स्वर्गैषिणो वेति विकल्प उपपद्यते। अत्र पुण्यलोकेषु यं लोकविशेषं यथैव येन प्रकारविशेषेण देवकन्यावरणादिना युक्ताः सन्तो यान्ति। तत्र तेषु पुण्यलोकेषु तमेव लोकविशेषं तेनैव प्रकारेण युद्धहता वीराश्च यान्ति। क्षणेनेत्युक्तं कालाल्पत्वमेतेष्वतिशयः।

ननु कालस्याल्पत्वेऽपि प्राणभीतेर्दुष्परिहरत्वात्पूर्वोक्तं युद्धेन दुर्लभमित्याशङ्क्य विचारवतः पुरुषस्य तत् सुलभमित्यभिप्रेत्य तं विचारं दर्शयति,—

जितेन लभ्यते लक्ष्मीर्मृतेनापि सुराङ्गना ।
क्षणध्वंसिनि कायेऽस्मिन् का चिन्ता मरणे रणे ॥ ३७ ॥ इति

जितेनेति कर्त्तरि निष्ठा। ततो जयेन लक्ष्मीलाभः, मरणेन सुराङ्गनालाभः। यदि कायजीवनलोभाल्लक्ष्मीदेवाङ्गनालाभौ न पर्यालोच्येते, तथापि लाभपरित्यागमात्रं तस्य केवलमवशिष्यते। कायस्तु सर्वथा न चिरं जीवति, तस्य कर्मप्रापितायुरवधिवर्त्तित्वेन क्षणध्वंसिस्वभावत्वात् ।

अत्यन्तनिषिद्धमपि रुधिरपानं यत्र निरतिशयपुण्यत्वेन परिणमते, तत्र पुण्यलोकप्राप्तौ कोविस्मयस्तदाह,—

> ललाटदेशे रुधिरं स्रवच्च
> यस्याहवे तु प्रविशेच्च वक्त्रम्।
> तत् सोमपानेन किलास्य तुल्यं
> संग्रामयज्ञे विधिवच्च दृष्टम्॥३८॥ इति।

संग्रामयज्ञप्रतिपादके नीतिशास्त्रादौ पुरोभागे प्रहारो वीर-सोमपानेनोपवर्णितइति विवक्षितत्वात् विधिवद्दृष्टमित्युक्तम्।

तदेवं नवभिः श्लोकैराशौचविधिप्रस्तावकत्वेन युद्धमरणस्य प्रशंसा कृता। यस्माद्युद्धहतोऽत्यन्तपुण्यात्मा, तस्मात्तन्मृतौ परिव्राजकमरणवदाशौचाभाव उपपद्यते। अथवा। तएते नवश्लोकाः प्रकरणादुत्कृष्य राजधर्मेषु व्याख्येयाः, युद्धस्य क्षत्रियधर्मत्वात्। यथा दर्शपूर्णमासप्रकरणे श्रूयमाणो रजस्वलाव्रतकलापः प्रकरणादुत्कृष्य अनर्थपरिहारेण पुरुषार्थतयोपवर्णितस्तद्वत्।

धर्मार्थमनाथब्राह्मणवहनादौ प्रशंसापूर्वकं सद्यःशौचं विद-धाति;—

> अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः।
> पदे पदे यज्ञफलमानुपूर्व्याल्लभन्ति ते॥३९॥
> न तेषामशुभं किञ्चित् पापं वा शुभकर्मणाम्।
> जलावगाहनात्तेषां सद्यःशौचं विधीयते॥४०॥ इति।

अनाथं बन्धुरहितमत एव निर्धनं ब्राह्मणमुद्दिश्य ये द्विजातयोवहन्ति

स्पृशन्ति वहन्ति च, ते पदे पदे यज्ञफलानि क्रमेण प्राप्नुवन्ति, तथा तेषामशुद्ध्याह्निकमपि नास्ति, तेषां स्नानादेव सद्यः शुद्धिर्विधीयते इत्यर्थः । तथा च बृहत्पराशरः,—

"प्रेतस्पर्शनसंस्कारे ब्राह्मणो नैव दुष्यति ।
वोढा चैवाग्निदाता च सद्यः स्नात्वा विशुध्यति"—इति ॥

यत्तु हारीतेनोक्तम् । "प्रेतस्पृशो ग्रामं न प्रविशेयुरानक्षत्रदर्शना-द्रात्रौ चेदादित्यस्य"—इति । यच्च देवलेनोक्तम्,—

"अह्नि चेद्दहनं कुर्यात् ऊर्ध्वमस्तमयाद्रवेः ।
स्नात्वा घृतं विशेद्विप्रो रात्रौ चेदुदयाद्रवेः"—इति ॥

तत् स्नेहादिना करणीयनिर्हरणे वेदितव्यम् ।

किं तु प्राणायामोऽपि कर्त्तव्य इत्याह,—

**असगोत्रमबन्धुञ्च प्रेतीभूतं द्विजोत्तमम् ।**
**वहित्वा च दहित्वा च प्राणायामेन शुध्यति ॥४१॥ इति ॥**

असगोत्रमसपिण्डमबन्धुं बन्धुरहितं प्रेतं ब्राह्मणं ये वहन्ति दहन्ति, तेषां प्राणायामेन शुद्धिरित्यर्थः । न केवलं स्नानप्राणायामौ, अग्निस्पर्शोऽपि कर्त्तव्यः । तदुक्तमङ्गिरसा,—

"यः कश्चिन्निर्हरेत् प्रेतमसपिण्डं कथञ्चन ।
स्नात्वा सचैलं स्पृष्ट्वाऽग्निं तस्मिन्नेवाह्नि वै शुचिः"—इति ॥

स्नेहादिना प्रेतनिर्हरणं कुर्वतोऽसपिण्डस्याशौचमस्ति । तथाच मनुः,—

"असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ।
विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥

यद्यन्नमत्ति तेषां स दशाहेन शुध्यति ।

अनदन्नन्नमह्नैव न च तस्मिन्गृहे वसेत्"—इति ॥

यस्तु प्रेतनिर्हरणं कृत्वा तद्गृहे वसति न च तदन्नमश्नाति तस्य त्रिरात्रमाशौचं, यस्तु तद्गृहे वसन् तदन्नमश्नाति तस्य दशरात्रं, यः पुनः प्रेतं निर्हृत्य तद्गृहवासं तदन्नञ्च परित्यजति तस्यैकाहमित्यर्थः। एतत्सवर्णविषयम्। असवर्णशवनिर्हारे तज्जातीयमाशौचं कार्यम्। तदाह गौतमः। "अवरश्चेद्वर्णः पूर्ववर्णमुपस्पृशेत्पूर्वो वाऽपरं तच्छवोक्तमाशौचं"—इति। उपस्पर्शनं निर्हरणम्। ब्राह्मणस्य शूद्रशवनिर्हारे मासमाशौचम्, शूद्रस्य ब्राह्मणशवनिर्हारे दशाहमाशौचं भवतीत्यर्थः। यस्त्वर्थलोभादसवर्णशवनिर्हरणं करोति तस्य द्विगुणमाशौचं भवतीति। तथाच व्याघ्रः,—

"अवरश्चेद्वरं वर्णं वरो वाऽप्यवरं यदि ।

वहेच्छवं तदाशौचं कृत्यर्थं द्विगुणं भवेत्"—इति ॥

असवर्णप्रेतनिर्हारे तदुक्तमाशौचं, तत्र वेतनाश्रयणे द्विगुणमाशौचं भवतीत्यर्थः। यत्तु विष्णुपुराणे,—

"योऽसवर्णं तु मूल्येन नीत्वा चैव दहेन्नरः ।

आशौचं तु भवेत्तस्य प्रेतजातिसमं सदा"—इति ॥

तदापदि द्रष्टव्यम्। अर्थलोभात्सवर्णशववहनादौ स्वजात्युक्तमाशौचं कार्यम्। तथाच कूर्मे,—

"यदि निर्हरति प्रेतं प्रलोभाक्रान्तमानसः ।

दशाहेन द्विजः शुध्येद्द्वादशाहेन भूमिपः ॥

अर्द्धमासेन वैश्यस्तु शूद्रो मासेन शुध्यति"—इति ।

यस्तु सपिण्डएव प्रेतं निर्हरति न तस्याशौचाधिक्यं, प्रेतनिर्हरणस्य विहितत्वात्। तदाह देवलः,—

"विहितं तु सपिण्डानां प्रेतनिर्हरणादिकम्।
तेषां करोति यः कश्चित् तस्याधिक्यं न विद्यते"—इति॥

आधिक्यमाशौचाधिक्यमित्यर्थः। समानोदकप्रेतनिर्हरणे त्र्यहम्। तदाह स एव,—

"यः समानोदकं प्रेतं वहेद्वाऽप्य दहेत वा।
तस्याशौचं त्र्यहं तु धर्मज्ञा मुनयो विदुः"—इति॥

ब्रह्मचारिणः प्रेतवहनकरणे व्रतलोपः। तदाह देवलः,—

"ब्रह्मचारी न कुर्वीत शवदाहादिकाः* क्रियाः।
यदि कुर्याच्चरेत्कृच्छ्रं पुनः संस्कारमेव च"—इति॥

पित्रादिशववहने तु न दोषः। तथाच मनुदेवलौ,—

"आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम्।
निर्हृत्य तु व्रती प्रेतान् न व्रतेन वियुज्यते"—इति॥

वसिष्ठोऽपि। "ब्रह्मचारिणः शवकर्मणा व्रतनिवृत्तिरन्यत्र मातापित्रोर्गुरोर्वा"—इति। याज्ञवल्क्योऽपि,—

"आचार्यपित्रुपाध्यायान् निर्हृत्यापि व्रती व्रती।
न तदन्नं† नाश्नीयाच्च च तैः सह संवसेत्"—इति॥

---

* प्रेतवाहादिकाः,—इति मु॰।

† सकटान्नं,—इति मो॰ पि॰।

व्रती ब्रह्मचारी पित्रादीनां निर्हरणादिकं कृत्वा यथाशौचिभिः सह वासं तदन्नञ्च परित्यजति, तदा व्रती व्रतचर्य्यान्न वियुज्यते इत्यर्थः। ब्रह्मपुराणेऽपि,—

"आचार्य्यं वाऽप्युपाध्यायं गुरुं वा पितरं तथा।
मातरं वा स्वयं दग्ध्वा व्रतस्थस्तत्र भोजनम्॥
कृत्वा पतति वै तस्मात् प्रेतान्नं न तु भक्षयेत्।
अन्यत्र भोजनं कुर्य्यान्न च तैः सह संवसेत्॥
एकाहमशुचिर्भूत्वा द्वितीयेऽहनि शुध्यति"—इति।

ब्राह्मणशववहनादौ शूद्रं न नियोजयेत्। तदाह मनुः,—

"न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण नाययेत्।
अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंस्पर्शदूषिता"—इति॥

अत्र स्वेषु तिष्ठत्स्वित्यभिधानं, अस्वर्ग्यत्वदोषश्रवणात्। विष्णुरपि। "मृतं द्विजं न शूद्रेण निर्हारयेन्न शूद्रं द्विजेन"—इति। यमोऽपि,—

"न शूद्रो यजमानं वै प्रेतीभूतं समुद्वहेत्।
यस्यानयति शूद्रोऽग्निं तृणं काष्ठं हवींषि च॥
प्रेतत्वं हि सदा तस्य स चाधर्मेण लिप्यते"—इति।

ब्राह्मणादिशवनिर्हारे दिङ्नियमो दर्शितो मनुना,—

"दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत्।
पश्चिमोत्तरपूर्वैस्तु यथायोगं द्विजन्मनः"—इति॥

हारीतोऽपि। "न ग्रामाभिमुखं प्रेतं हरेयुः"—इति।

अनुगमनाशौचमाह,—

**अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा।**
**स्नात्वा सचैलं स्पृष्ट्वाऽग्निं घृतं प्राश्य विशुध्यति।** इति॥

ज्ञातिं सपिण्डव्यतिरिक्तं बन्धुं, सपिण्डानुगमनस्य विहितत्वात्। अज्ञातिमबन्धुं वा समानोत्कृष्टजातिप्रेतं कामतयाऽनुगम्य सचैलं स्नात्वाऽग्निं स्पृष्ट्वा घृतभुक् शुध्यति इत्यर्थः। तथाच याज्ञवल्क्यः,—

"अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाऽग्निं घृतभुक् शुचिः"—इति॥

कूर्मेऽपि,—

"प्रेतीभूतं द्विजं विप्रो योऽनुगच्छेत कामतः।
स्नात्वा सचैलं स्पृष्ट्वाऽग्निं घृतं प्राश्य विशुध्यति"—इति॥

अत्र च विशेषः कश्यपेनोक्तः,—

"अनुगम्य शवं बुद्ध्या स्नात्वा स्पृष्ट्वा हुताशनम्।
सर्पिः प्राश्य पुनः स्नात्वा प्राणायामैर्विशुध्यति"—इति॥

न च घृतप्राशनस्य भोजनकार्ये विधानाद्भोजनसिद्धिरिति वाच्यम्। तस्य प्रायश्चित्तत्वेन विधानात्। प्राणायामैरिति बहुवचनस्य कपिञ्जलन्यायेन त्रित्वे पर्यवसानात्, त्रिभिः प्राणायामैः शुध्यति,—इत्यर्थः।

निकृष्टजात्यनुगमनाशौचमाह,—

**क्षत्रियं मृतमज्ञानाद् ब्राह्मणो योऽनुगच्छति।**
**एकाहमशुचिर्भूत्वा पञ्चगव्येन शुध्यति॥**
**शवञ्च वैश्यमज्ञानाद्ब्राह्मणो योऽनुगच्छति।**
**कृत्वाऽऽशौचं द्विरात्रञ्च प्राणायामान् षडाचरेत्॥**

प्रेतीभूतन्तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः ।
अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत् ॥
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम् ।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति । इति ॥

यो ब्राह्मणः स्वज्ञानान्मौर्ख्यात् क्षत्रियं प्रेतमनुगच्छति, स एकाह-माशौचं कृत्वा पञ्चगव्येन शुध्यति। ब्राह्मणो वैश्यशवानुगमनं कृत्वा द्विरात्राशौचानन्तरं षड्भिः प्राणायामैः शुध्यति। शूद्रशवानुगमनं कृत्वा त्रिरात्रमाशौचं समाप्य समुद्रगां स्नात्वा शतं प्राणायामान् कृत्वा घृतप्राशनेन शुध्यति। उपक्रमोपसंहारपर्यालोचनया क्षत्रियादिशवानु-गमनेऽपि स्नानप्राणायामघृतप्राशनान्यनुसन्धेयानि। एवञ्च सति क्षत्रियस्य वैश्यशवानुगमने एकाहं शूद्रशवानुगमने त्र्यहं, वैश्यस्य शूद्रशवानुगमने एकाहमाशौचमित्यूहनीयम्। तथाच कूर्मः,—

"एकाहात् क्षत्रिये शुद्धिर्वैश्ये स्यात्तु द्व्यहेन तु।
शूद्रे दिनत्रयं प्रोक्तं प्राणायामशतं पुनः"—इति॥

द्विजानां शूद्रशवानुगमननिषेधे कदा तैः शूद्रा अनुगन्तव्या-इत्यत आह,—

विनिर्वर्त्य यदा शूद्रा उदकान्तमुपस्थिताः ।
द्विजैस्तदाऽनुगन्तव्या एष धर्मः सनातनः । इति ॥

उदकसम्बन्धेनोदकक्रियोच्यते। तस्या अन्तः समाप्तिः। तां निर्वर्त्य आशौचं परिसमाप्य यदा स्थिताः, तदा द्विजैरनुगन्तव्याः अनु-सर्तव्याः,—इति ।

एवं, ब्राह्मणस्यातुरक्षत्रियवैश्यानुसरणं क्षत्रियस्याप्यातुरवैश्यानुसरणमाशौचानन्तरमेवेत्यूहनीयम्। आशौचमध्ये आतुरस्पर्शने त्वाशौचमस्ति। तत्र ब्राह्मणस्य सवर्णविषयातुरस्पर्शने पारस्करः,—

"अस्थिसञ्चयनादर्वाग्रुदित्वा स्नानमाचरेत्।
अन्तर्दशाहे विप्रस्य ऊर्द्ध्वमाचमनं स्मृतम्—इति॥

विप्रस्य मृतस्य दशाहाभ्यन्तरेऽस्थिसञ्चयनादर्वाग्ब्राह्मणः सपिण्डादिर्वाऽऽतुरस्पर्शनं कृत्वा स्नानमाचरेत्। ततऊर्द्ध्वमाचमनमाचरेदिति। क्षत्रियमरणविषयातुरस्पर्शने क्षत्रियादीनां, वैश्यमरणविषयातुरस्पर्शने वैश्यशूद्रयोश्च प्रागस्थिसञ्चयनात् सचेलं स्नानं, ततऊर्द्ध्वं स्नानमात्रमेव। तदुक्तं ब्रह्मपुराणेऽभिहितम्,—

"मृतस्य यावदस्थीनि ब्राह्मणस्याहृतानि तु।
तावच्चोऽप्यन्यवर्णस्य रौति तद्बान्धवैः सह॥
तस्य स्नानाद्भवेच्छुद्धिस्ततस्त्वाचमनं स्मृतम्।
सचेलं स्नानमन्येषां भवते क्षत्रियस्य च॥
कृते तु केवलं स्नानं क्षत्रविट्शूद्रजन्मनाम्"—इति।

ब्राह्मणस्य क्षत्रियवैश्यमरणविषयातुरस्पर्शने अस्थिसञ्चयनादर्वागेकाहमाशौचं सचेलं स्नानञ्च, ततऊर्द्ध्वं सचेलं स्नानमात्रम्। तथाच ब्रह्मपुराणम्,—

"अस्थिसञ्चयने विप्रो रौति चेत् क्षत्रवैश्ययोः।
तदा स्नातः सचेलस्तु द्वितीयेऽहनि शुध्यति॥
कृते तु सञ्चये विप्रः स्नानेनैव शुचिर्भवेत्"—इति।

क्षत्रियस्य वैश्यमरणविषयातुरस्पर्शने विशेषाभावेऽपि ब्राह्मणस्य

समनन्तरोक्तविप्रमरणविषयानुगमने यदाशौचं विवक्षितं तदेवात्रेति न्यायतोऽवगम्यते। शूद्रमरणविषयानुगमनेऽस्थिसञ्चयनात् प्राक् ब्राह्मणस्य त्रिरात्रमाशौचं, क्षत्रियवैश्ययोर्द्विरात्रं, ततऊर्द्धं दिवातीतमेकरात्रमेव। शूद्रशवं विनाऽनुगमनेऽस्थिसञ्चयनादर्वागेकरात्रमाशौचं, ततऊर्द्धं सद्योतिराशौचमिति। तथाच पारस्करः,—

"अस्थिसञ्चयनादर्वाग्यदि विप्रोऽश्रु पातयेत्।
मृते शूद्रे गृहं गत्वा त्रिरात्रेण विशुध्यति॥
अस्थिसञ्चयनादूर्द्धं मासं यावद्द्विजातयः।
अहोरात्रेण शुध्यन्ति वाससः क्षालनेन च॥
सजातेर्दिवसेनैव स्नानात् क्षत्रियवैश्ययोः।
शवं विनाऽनुगमने शूद्रोऽह्नैकेन शुध्यति"—इति॥

अत्राश्रुपात आतुरमनुगमनमात्रोपलक्षणार्थः। सजातेः शूद्रस्यास्थिसञ्चयनादर्वाक् शवं विनाऽनुगमने आतुरमनुगमने दिवसेनाहोरात्रेण शुद्धिः, ततऊर्द्धं नक्तेन रात्रौ चेद्रात्र्याऽहनि चेदह्ना शुद्धिरिति। एवञ्च शवनिर्हरणानुगमनसहातुरक्रन्दनादिनिमित्तमाशौचमसपिण्डानां, सपिण्डानान्तु विहितत्वात् नास्ति। तथाच हारीतः,—

"विहितं हि सपिण्डस्य प्रेतनिर्हरणादिकम्।
दोषः स्यादसपिण्डस्य तथाऽनाथक्रियां विना"—इति॥

प्रेतनिर्हरणादिकमित्यत्रादिशब्देन दाहोदकदानादिकमुच्यते। अनुगमनादिविधिर्ब्रह्मवर्त्तेन दर्शितः,—

"आ श्मशानादनुगम्य इतरो ज्ञातिभिर्वृतः।
यमसूक्तं तथा गाथां जपद्भिर्लौकिकाग्निना॥

ततःश्रौतादुपेतस्तेद्याहिताग्निर्यथार्थवत्"—इति ।

अनग्निर्वाहितरः सपूर्वदिवसैर्व्रतोज्ञातिभिः सपिण्डैः श्मशान-भूमिं यावदनुगन्तव्यः । तथा, यमसूक्तं परेयुवांसमिति षोडशर्चं तथा यमदैवत्यां गाथां च अपठित्वैव लौकिकाग्निना च दग्धव्यः । उपेत-उपनीतश्चेद्भवेत्, तदा आहिताग्निसंस्कारप्रकारेणार्थवत् प्रयोजनवत्तया भवति तथा दग्धव्यः । अयमभिप्रायः । येषां मन्त्रोच्चारणप्रोक्षणादी-नामाहिताग्निविहितसंस्काराणां करणमर्थवत्, दाहकार्यरूपं प्रयोजन-मस्ति, तान्यनुष्ठेयानि । यानि तु कुशार्थानि पात्रप्रयोजनादीनि तान्यननुष्ठेयानि । यथा कृष्णलेष्वतिदेशप्राप्तेष्ववघातप्रोक्षणादिषु दार-लोपादवघातादीनामननुष्ठानं प्रोक्षणादीनामनुष्ठानमिति । अत्र लौकिकाग्निग्रहणं आगाराग्नेरभावे, तत्सद्भावे तु तस्मिन्नाहितोऽग्नि-र्ग्राह्यः न तु लौकिकाग्निः तस्याग्निसाध्यकार्यमात्रार्थत्वेनोत्पत्तेः । लौकिकाग्निश्चण्डालाग्न्यादिव्यतिरिक्तो ग्राह्यः, तेषां निषिद्धत्वात् । तथा च देवलः,—

"चण्डालाग्निरमेध्याग्निः सूतकाग्निश्च कर्हिचित् ।
पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचिताः"—इति ॥

आहिताग्निस्तु श्रौताग्निना दग्धव्यः, अनाहिताग्निर्गृह्याग्निना, इतरो लौकिकेन । तदाह वृद्धयाज्ञवल्क्यः,—

"आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः ।
अनाहिताग्निरेकेन लौकिकेनेतरो जनः"—इति ॥

एकेन गृह्याग्निना दाहश्च उपनयनान्तरं कर्तव्यः । तथा च कात्यायनः,—

"दुर्बलं स्नापयित्वा च शुद्धचेलाभिसंवृतम्।
दक्षिणाशिरसं भूमौ बर्हिष्मत्यां निवेशयेत्॥
घृतेनाभ्यक्तमाप्लाव्य सवस्त्रमुपवीतिनम्।
चन्दनोक्षितसर्वाङ्गं सुमनोभिर्विभूषयेत्॥
हिरण्यशकलान्यस्य क्षिप्त्वा छिद्रेषु सप्तसु।
मुखे वस्त्रं निधायैनं निर्हरेयुः सुतादयः॥
आमपात्रेऽन्नमादाय प्रेतमग्निपुरःसरम्।
एकोऽनुगच्छन् तस्यार्द्धमर्द्धं पथ्युत्सृजेद्भुवि॥
अर्द्धमादहनं प्राप्तमासीनो दक्षिणामुखः।
सव्यं जान्वाच्य शनकैः सतिलं पिण्डदानवत्"—इति॥

पिण्डदानविधिना आदहनं श्मशानपर्यन्तमानीतमन्नं प्रक्षिपेदित्यर्थः। दाहानन्तरं चितिमनवेक्षमाणाः स्नात्वा जलसमीपं गत्वा उदकं सकृत् त्रिर्वा दद्युः। तथाच कात्यायनः,—

"अथानवेक्षमेत्यापः सर्व्व एव शवस्पृशः।
स्नात्वा सचेलमाचम्य दद्युरस्योदकं स्थले॥
गोत्रनामपदान्ते च तर्पयामीत्यनन्तरम्।
दक्षिणाग्रान् कुशान् कृत्वा सतिलन्तु पृथक् सकृत्"—इति॥

पैठीनसिरपि। "प्रेतं मनसा ध्यायन् दक्षिणाभिमुखश्चोदकाञ्जलीन्निनयेत्"—इति। एतच्चायुग्मतिथिषु कार्यं, "प्रथमतृतीयपञ्चमसप्तमनवमेषूदकक्रिया"—इति गौतमस्मरणात्। प्रेतोपकारविशेषापेक्षया तु यावन्त्याशौचदिनानि तावदुदकदानावृत्तिः कार्या। तथाच प्रचेताः,—

"दिने दिनेऽञ्जलीन् पूर्णान् प्रदद्यात् प्रेतकारणात् ।
तावद्वृद्धिश्च कर्त्तव्या यावत्पिण्डः समाप्यते"—इति ।

यावद्दशमः पिण्डः समाप्यते, तावदञ्जलिवृद्धिः कार्येत्यर्थः । अत्रापरो विशेषश्चैवोक्तः,—

"नदीकूलं ततो गत्वा शौचं कृत्वा यथार्थवत् ।
वस्त्रं संशोधयेदादौ ततः स्नानं समाचरेत् ॥
सचेलस्तु ततः स्नात्वा शुचिः प्रयतमानसः ।
पाषाणं तत्र चादाय विप्रे दद्यात् दशाञ्जलीन् ॥
द्वादश क्षत्रिये दद्याद्वैश्ये पञ्चदश स्मृताः ।
त्रिंशच्छूद्राय दातव्यास्ततः सम्प्रविशेद्गृहम् ॥
ततः स्नानं पुनः कार्यं गृहशौचञ्च कारयेत्"—इति ॥

ज्ञातिभिरपि कश्चित् उदकदानं कर्त्तव्यम् । तदाह याज्ञवल्क्यः,—

"एवं मातामहाचार्यप्रेतानामुदकक्रिया ।
कामोदकं सखिप्रत्तास्वस्रीयश्वशुरर्त्विजाम्"—इति ॥

प्रत्ता परिणीता दुहितृभगिन्यादिः । स्वस्रीयो भागिनेयः । अत्र प्रेतानां मातामहादीनां सपिण्डवदुदकदानं नित्यं कार्यं, सख्यादीनां तु कामतः न नित्यतया, अकरणे प्रत्यवायाभावादिति ।

उदकदानानन्तरं पिण्डदानमपि कर्त्तव्यम् । तथाच विष्णुः। "प्रेतस्यो-दकनिर्वपणं कृत्वा एकञ्च पिण्डं कुशेषु दद्युः"—इति। पिण्डोदकदानञ्च यावदाशौचं कार्यम्। तदाह स एव। "यावदाशौचं तावत्प्रेतस्योदकं पिण्डञ्च दद्युः"—इति । वर्णानुक्रमेण पिण्डसङ्ख्यानियमः पारस्करेणोक्तः,—

"ब्राह्मणे दश पिण्डाः स्युः क्षत्रिये द्वादश स्मृताः।
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत्प्रकीर्त्तिताः"—इति॥

त्र्यहाशौचत्र्यहे यावदाशौचमिति विष्णुवचनात् पिण्डह्रासप्राप्तौ शातातपः,—

"त्र्यहाशौचस्य च त्र्यहेऽपि पिण्डान् दद्यात् दशैव तु"—इति।

त्रिरात्राशौचपक्षे दशपिण्डदानप्रकारः पारस्करेण दर्शितः,—

"प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः।
द्वितीये चतुरो दद्यादस्थिसञ्चयनं तथा॥
त्रींस्तु दद्यात् तृतीयेऽह्नि वस्त्रादीन् क्षालयेत् तथा"—इति॥

उदकदानवत्पिण्डदानं न सर्वैः कर्त्तव्यमपि तु पुत्रेणैव, तदभावे सन्निहितेन सपिण्डेन, तदभावे मातृसपिण्डादिना। तदाह गौतमः। "पुत्राभावे सपिण्डाः मातृसपिण्डाः शिष्याश्च दद्युः तदभावे ऋत्विगाचार्यौ"—इति। पुत्रेष्वपि ज्येष्ठ एव पिण्डं दद्यात्। तथाच मरीचिः,—

"सर्वैरनुमतिं कृत्वा ज्येष्ठेनैव तु यत्कृतम्।
द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्"—इति॥

यदा पुत्रासन्निधानादिनाऽन्यः पिण्डदानं करोति, तदा दशाह-मध्ये पुत्रसन्निधौऽपि स एव दशाहं पिण्डं दद्यात्। तदुक्तं गृह्य-परिशिष्टे,—

"असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्।
प्रथमेऽहनि यः कुर्यात् स दशाहं समापयेत्"—इति॥

यथा दशाहे पिण्डदाने कर्त्तृनियमः, तथा द्रव्यनियमोऽपि। तदाह शुनःपुच्छः,—

"शाखिना पशुभिर्वाऽपि शाकैर्वाऽथ निर्वपेत् ।

प्रथमेऽहनि यद्द्रव्यं तदेव स्याद्दशाहिकम्"—इति ॥

यदा तु दशाहमध्ये दर्शपातस्तदा दर्शस्योत्तरं तन्त्रं पिण्डोदकदानरूपं समापयेत् । तदाह कश्यपः,—

"आशौचमध्यतो दर्शो यदि स्यादप्यकर्म्मिणः ।

समाप्तिं प्रेततन्त्रस्य कुर्य्यादित्याह गौतमः"—इति ॥

भविष्यपुराणेऽपि,—

"प्रवृत्ताशौचतन्त्रस्य यदि दर्शः प्रपद्यते ।

समाप्य चोदकं पिण्डं स्नानमात्रं समाचरेत्"—इति ॥

पैठीनसिरपि,—

"आदेशाहाच्च कर्त्तव्या प्रेतपिण्डोदकक्रिया ।

द्विरैन्दवे तु कुर्व्वाणो पुनः स्नानं समश्नुते"—इति ॥

मातापितृविषये तु विशेषो गार्ग्येणोक्तः,—

"पित्रोराशौचमध्ये तु यदि दर्शः समापतेत् ।

तावदेवोत्तरं तन्त्रं पर्य्यवस्येत् त्र्यहात् परम्"—इति ॥

पित्रोराशौचमध्ये तु त्रिरात्रात्परं यदि दर्शः समापतेत्, तदैवोत्तरं तन्त्रं दर्शे समापयेत्, नार्व्वाग्दर्शपाते । यत्तु लौगाक्षिणोक्तम्,—

"अन्तर्दशाहे दर्शे तु तन्त्रं सर्व्वं समापयेत् ।

पित्रोस्तु यावदाशौचं दद्यात् पिण्डान् जलाञ्जलीन्"—इति ॥

तत् त्रिरात्रादर्व्वाग्दर्शपाते वेदितव्यं, त्र्यहात्परमिति गार्ग्येण विशेषितत्वात् । पिण्डोदकदानानन्तरं बान्धवैरातुराश्वासनं कार्य्यम् ।

तथाच याज्ञवल्क्यः,—

"कृतोदकान् समुत्तीर्णान् मृदुशाद्वलसंस्थितान्।

स्नातानपवदेयुस्तानितिहासैः पुरातनैः"—इति।

इतिहासस्तु तेनैव दर्शितः,—

"मानुष्ये कदलीस्तम्भे निःसारे सारमार्गणम्।

करोति यः स सम्मूढो जलबुद्बुदसन्निभे।

पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः॥

कर्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना।

गन्त्री वसुमती नाशमुदधिर्दैवतानि च॥

फेनप्रख्यः कथं नाम मर्त्यलोको न यास्यति"—इति॥

कात्यायनोऽपि,—

"एवं कृतोदकान् सम्यक् सर्वान् शाद्वलसंस्थितान्।

आप्लुतान् पुनराचान्तान्वदेयुस्तेऽनुयायिनः।

मा शोकं कुरुतानित्ये सर्वस्मिन् प्राणधर्मिणि॥

धर्मं कुरुत यत्नेन यो वः सह करिष्यति"—इति।

शोके दोषोऽपि याज्ञवल्क्येन दर्शितः,—

"श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः।

अतो न रोदितव्यं हि क्रियाः कार्याः प्रयत्नतः"—इति

शवानुगमनानन्तरकृत्यं याज्ञवल्क्येनोक्तम्,—

"इति संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः।

विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः॥

आचम्याग्न्यादि सलिलं गोमयं गौरसर्षपान्।

प्रविशेयुः समाचम्य स्नाऽप्यग्निं पदं शनैः”—इति ॥

अयमपरोविशेषः शङ्खेन दर्शितः । “दूर्वाप्रवालमग्निं वृषभं चालभ्य गृहद्वारे प्रेताय पिण्डं दत्त्वा पश्चात् प्रविशेयुः”—इति । आशौचिनियमा मनुना दर्शिताः,—

“अक्षारलवणान्नाः स्युर्निमज्जेयुश्च तेऽप्यहम् ।
मांसाशनञ्च नाश्नीयुः शयीरंश्च पृथक् क्षितौ”—इति ॥

मार्कण्डेयेनापि,—

“क्रीतलब्धाशनाश्चैव भवेयुः सुसमाहिताः ।
न चैव मांसमश्नीयुर्भवेयुर्न च शोभितम्”—इति ॥

गौतमेनापि । “अधःशय्यासना ब्रह्मचारिणः सर्वे समाशीरन्मांसं न भक्षयेयुराप्रदानात् प्रथमतृतीयपञ्चमनवमेषूदककर्म नवमे वाससां त्यागः अन्त्ये त्वन्त्यानाम्”—इति । प्रदानं प्रेतोद्देशेन श्राद्धं, वाससां त्यागस्तु प्रक्षालनार्थं रजकार्पणं, अन्त्ये दशमेऽहनि, तथाऽन्त्यानामन्त्यपरिचारकाणां वाससां त्याग इत्यर्थः । प्रथमेऽहनि प्रेतमुद्दिश्य जलं क्षीरं चाकाशे शिक्यादौ पात्रद्वये स्थापनीयम् । तदाह पारस्करः,—

“जलमेकाहमाकाशे स्थाप्यं क्षीरञ्च मृण्मये”—इति ।

प्रथमतृतीयपञ्चमनवमदिवसानामन्यतमस्मिन्नस्थिसञ्चयनं कार्यम् । तदाह संवर्तः,—

“प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा* ।
अस्थिसञ्चयनं कार्यं दिने तद्गोत्रजैः सह”—इति ॥

---

* पञ्चमेऽथवा,—इति मु० ।

चतुर्थे दिवसेऽस्थिसञ्चयनमाह विष्णुः। "चतुर्थे दिवसेऽस्थिसञ्चयनं कुर्युः तेषां गङ्गाम्भसि प्रक्षेपः"—इति। अस्थिसञ्चयने तिथिवारनक्षत्रनिषेधो यमेनोक्तः,—

"भौमार्कमन्दवारेषु तिथियुग्मेषु वर्जयेत्।
वर्जयेदेकपादृक्षे द्विपादृक्षेऽस्थिसञ्चयम्॥
मद्राद्यष्टनक्षत्रे त्रिपादृक्षे विशेषतः"—इति।

वृद्धमनुः,—

"धनिष्ठार्द्धादितः पञ्चभेषु विवर्जयेत्।
द्विपादृक्षयोश्चैव नन्दायां च विशेषतः॥
यमघण्टादिद्वितीये घातकादिकलेव च।
पुष्ये च स्वजनर्क्षे फल्गुनीद्वयमेव च॥
भानुभौमार्किवारेषु चतुर्थीतिथिसन्ध्ययोः।
चतुर्दश्यां त्रयोदश्यां नैधने च विवर्जयेत्॥
अस्थिसञ्चयनं कार्यं कुलक्षयकरं भवेत्"—इति*।

वापनं दशमेऽहनि कार्यम्। तदाह देवलः,—

"दशमेऽहनि सम्प्राप्ते स्नानं ग्रामाद्बहिर्भवेत्।
तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च"—इति॥

देशान्तरे तु एकादशाहात्प्रागनियमेन वापनं कार्यमित्युक्तम्,—

"द्वितीयेऽहनि कर्त्तव्यं क्षुरकर्म† प्रयत्नतः।

---

* वृद्धमनुः,—इत्यारभ्य एतदन्तो ग्रन्थो नास्ति मुद्रितातिरिक्तपुस्तकेषु।
† कर्म,—इति मु०। एवं परत्र।

विधानात् । "अशौचापगमे"—इति साधारणेनैवैकोद्दिष्टस्य विष्णुना विहितत्वाच्च ।

"आद्यश्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि ।
कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः"—इति

शङ्खवचनेनाशौचमध्ये एकादशेऽह्नि एकोद्दिष्टविधानाच्चैवमिति चेत् । न । मातर्यग्रे प्रमीतायां तदाशौचमध्ये यदि पिता म्रियेत, ततो मातुरेकोद्दिष्टश्राद्धमेकादशेऽह्नि अशुद्धोऽपि कुर्यादिति विषयान्तरसम्भवात् । यत्तु,—

"एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम् ।
चतुर्णामपि वर्णानां सूतकन्तु पृथक् पृथक्"—इति

पैठीनसिवचनं, तस्यायमर्थः । आशौचानन्तरदिने यच्छ्राद्धं विहितं, तच्चतुर्णामपि वर्णानां साधारणं न प्राप्नुयादिति । कथं तर्ह्येकादशाह-शब्दस्योपपत्तिरिति चेत् । न । लक्षणया तस्याशौचानन्तरदिनपरत्वेनोपपत्तेः ।

अथोच्यते । एकादशाहकालविशिष्टमेकोद्दिष्टश्राद्धं चतुर्णां वर्णानां विधीयते । "न विधौ परः शब्दार्थः"—इति न्यायेनैकादशाहशब्दस्य लक्षणयाऽऽशौचानन्तरदिनपरत्वानुपपत्तेः । सति मुख्ये लक्षणाया अन्याय्यत्वाच्च, एकादशाह एव क्षत्रियादिभिरप्येकोद्दिष्टश्राद्धं कर्त्तव्यम् । नन्वेकादशेऽह्नि क्षत्रियादीनां शुद्ध्यभावाच्छ्राद्धेऽधिकारो नास्तीत्युक्तमिति चेत् । न । कर्त्तुस्तात्कालिकी शुद्धिरिति वचनात्तात्कालिक्याः शुद्धेः सत्त्वात् । यत्तु शङ्खवचनमाशौचमध्ये आशौ-चान्तरप्राप्तावेकोद्दिष्टमेकादशेऽह्नि अशुद्धोऽपि कुर्यादिति विषय-

विशेषे तात्पर्यमुक्तम् । तन्न । तथापि शुद्ध्यभावादिवस्य चोद्यस्य समानत्वात् । सामान्येन प्रवृत्तस्य मनुवचनस्य विना कारणं विशेषपरत्वेन सङ्कोचायोगाच्च । यत्तूक्तं, यथाशौचापगमइति सामान्येनोपक्रम्य विष्णुनैकोद्दिष्टविधानादाशौचानन्तरमेव सर्वैरेकोद्दिष्टं कर्त्तव्यमिति । तन्न । विष्णुवचनस्य द्वादशाशौचिब्राह्मणविषयत्वेनोपपत्तेः । तस्मादेकादशाहएव क्षत्रियादिभिरप्येकोद्दिष्टं कर्त्तव्यमिति सुष्ठूक्तम् ।

## अथ संगृहीतश्राद्धनिर्णयः प्रपञ्च्यते ।

प्रेतोद्देशेन श्रद्धया द्रव्यत्यागः श्राद्धम् । तदुक्तं ब्रह्मपुराणे,—

"देशे काले च पात्रे च श्रद्धया विधिना च यत् ।
पितॄनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम्"—इति ॥

तच्च पार्वणैकोद्दिष्टभेदेन द्विविधम् । पुरुषत्रयमुद्दिश्य यत् क्रियते, तत् पार्वणम् । एकपुरुषोद्देशेन यत् क्रियते, तदेकोद्दिष्टम् । एवं द्विविधमपि श्राद्धं नित्यनैमित्तिककाम्यभेदेन त्रिधा भिद्यते । तत्र जीवनोपाधौ चोदितं नित्यम् । यथा अमावस्यादौ चोदितं श्राद्धम् । अनियतनिमित्तकं नैमित्तिकम् । यथोपरागादौ । कामनोपाधिकं काम्यम् । यथा तिथिनक्षत्रादिषु । यत्तु विश्वामित्रेण द्वादशविधमुक्तम्,—

"नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् ।
पार्वणं चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम् ॥
कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम् ।
यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं मतम्"—इति ॥

तन्नित्यनैमित्तिककाम्यावान्तरभेदविवक्षयैव, न तु ततः पार्वण-

विधयस्ता । तथाहि । तत्र नित्यमित्यहरहः श्राद्धमुच्यते । नैमि-त्तिकमेकोद्दिष्टम् । तदाह पारस्करः,—

"अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्त्तितम् ।
वैश्वदेवविहीनन्तु अशक्तावुदकेन तु ॥
एकोद्दिष्टन्तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
तदप्यदैवं कर्त्तव्यमयुग्मानाशयेद् द्विजान्"—इति ॥

काम्यमित्यभिमतार्थसिद्ध्यर्थम् । वृद्धिश्राद्धमिति पुत्रजन्मविवाहादौ क्रियमाणम् । सपिण्डनं सपिण्डीकरणम् । पार्व्वणमिति प्रति पर्व्व क्रियमाणम् । गोष्ठ्यामिति गोष्ठ्यां क्रियमाणं श्राद्धम् । तदाह वृद्धवसिष्ठः,—

"अभिप्रेतार्थसिद्ध्यर्थं काम्यं पार्व्वणवत् स्मृतम् ।
पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम् ।
यतः*प्रेतार्थपात्रस्य पिण्डस्य परिकीर्त्यते ॥
पितृपात्रेषु पिण्डेषु सपिण्डीकरणन्तु तत् ।
प्रति पर्व्व भवेद्यस्मात् प्रोच्यते पार्व्वणन्तु तत् ॥
गोष्ठ्यां यत् क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते ।
बहूनां विदुषां प्राप्तौ सुखार्थं पितृतृप्तये"—इति ॥

शुद्ध्यर्थमिति शुद्धये क्रियमाणम् । तदाह प्रचेताः,—

"क्रियते शुद्धये यत्तु ब्राह्मणानान्तु भोजनम् ।
शुद्ध्यर्थमिति तत् प्रोक्तं श्राद्धं पार्व्वणवत् स्मृतम्" ॥

---

* यदा,—इति मु० ।

कर्माङ्गमिति यागादौ क्रियमाणम्। दैविकमिति देवानुद्दिश्य क्रियमाणम्। यात्राश्राद्धमिति प्रवेशनिर्गमयोः क्रियमाणम्।

तदाह पारस्करः,—

"निषेककाले सोमे च सीमन्तोन्नयने तथा।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम्॥
देवानुद्दिश्य क्रियते यत्तद्दैविकमुच्यते।
तन्नित्यश्राद्धवत्कुर्यात् द्वादश्यादिषु यत्नतः॥
गच्छन् देशान्तरं यद्धि श्राद्धं कुर्यात्तु सर्पिषा।
तद्यात्रार्थमिति प्रोक्तं प्रवेशे च न संशयः"—इति॥

तत्र कर्माङ्गमिति वचनमकरणे कर्मवैगुण्यज्ञापनार्थम्। सर्पिषा सर्पिःप्रधानेनेत्यर्थः। अन्यथा केवलेन हविरसम्भवात्*।

## अथ देशकथनम्।

श्राद्धञ्च दक्षिणाप्रवणे गोमयाद्युपलिप्ते देशे कार्यम्। तदाह विष्णुधर्मोत्तरे,—

"दक्षिणाप्रवणे देशे तीर्थादौ वा गृहेऽपि वा।
भूसंस्कारादिसंयुक्ते श्राद्धं कुर्यात्प्रयत्नतः"—इति॥

तीर्थं देवर्षिसेवितं कुण्डम्†। आदिशब्देन पुण्याश्रमादि स्थानं। भूसंस्कारो गोमयादिनोपलेपः। आदिशब्देनाशुद्धिद्रव्यापसारणम्। याज्ञवल्क्योऽपि,—

* अत्र,—इत्यारभ्य एतदन्तग्रन्थो नास्ति सो० ना० पु०।

† जलम्,—इति मु०।

"परिश्रिते* शुचौ देशे दक्षिणाप्रवणे तथा"—इति।

परिश्रिते पश्चितः प्रच्छादिते, शुचौ गोमयादिनोपलिप्ते दक्षिणाप्रवणे दक्षिणोन्नते देशे, श्राद्धं कुर्यादित्यर्थः। स्वतोदक्षिणाप्रवणत्वाभावे देशस्य यत्नतोदक्षिणाप्रवणत्वं कार्यम्। तथाच मनुः,—

"शुचिं देशं विविक्तञ्च गोमयेनोपलेपयेत्।
दक्षिणाप्रवणञ्चैव प्रयत्नेनोपपादयेत्"—इति॥

क्रिमिकीटाद्युपहतं देशं श्राद्धे विवर्जयेत्। तदाह यमः,—

"दुष्टं क्रिमिहतं क्लिन्नं सङ्कीर्णानिष्टगन्धिकम्।
देशन्त्वनिष्टशब्दञ्च वर्जयेच्छ्राद्धकर्मणि"—इति॥

क्लिन्नं सपङ्कम्। सङ्कीर्णमन्यैः सङ्कीर्णम्। मार्कण्डेयोऽपि,—

"वर्ज्या जन्तुमती रूक्षा क्षितिः प्लुष्टा तथाऽग्निना।
अनिष्टदुष्टशब्दोग्रा दुर्गन्धिः श्राद्धकर्मणि"—इति॥

कृत्रिमादिदेशेष्वपि श्राद्धं न कार्यम्। तदाह शङ्खः,—

"गोमयाश्माजकृष्टेषु कृत्रिमायां तथा भुवि।
न कुर्याच्छ्राद्धमेतेषु पारक्यास्वपि भूमिषु"—इति॥

कृत्रिमायां वेदिकादौ। पारक्यासु परपरिगृहीतासु। तासु गृहगोष्ठारामादयः। न पुनस्तीर्थादिस्थानानि। तथाचादिपुराणम्,—

"अटव्यः पर्वताः पुण्या नदीतीराणि यानि च।
सर्वाण्यस्वामिकान्याहुर्नहि तेषु परिग्रहः॥
वनानि गिरयो नद्यस्तीर्थान्यायतनानि च।
देवखाताश्च गर्त्ताश्च न स्वामी तेषु विद्यते"—इति॥

---

* परिश्रिते,—इति सो॰ मा॰। एवं परत्र।

तीर्थक्षेत्रविशेषेषु कृतं श्राद्धमतिशयफलप्रदं भवति। तदाह देवलः,—

"श्राद्धस्य पूजितो देशो गया गङ्गा सरस्वती।
कुरुक्षेत्रं प्रयागञ्च नैमिषं पुष्कराणि च॥
नदीतटेषु तीर्थेषु शैलेषु पुलिनेषु च।
विविक्तेष्वेव तुष्यन्ति दत्तेनेह पितामहाः"—इति॥

व्यासोऽपि,—

"पुष्करेष्वक्षयं श्राद्धं जपहोमतपांसि च।
महोदधौ प्रयागे च काश्यां च कुरुजाङ्गले"—इति॥

शङ्खोऽपि,—

"गङ्गायमुनयोस्तीरे पयोष्ण्यमरकण्टके*।
नर्मदाबाहुदातीरे भृगुतुङ्गहिमालये॥
गङ्गाद्वारे प्रयागे च नैमिषे पुष्करे तथा।
सन्निहत्यां गयायाञ्च दत्तमक्षयतां व्रजेत्"—इति॥

ब्रह्माण्डपुराणेऽपि,—

"नदीसमुद्रतीरे वा ह्रदे गोष्ठेऽथ पर्वते।
समुद्रगानदीतीरे सिन्धुसागरसङ्गमे॥
गङ्गायां सङ्गमे यद्वा शालग्रामशिलान्तिके।
पुष्करे वा कुरुक्षेत्रे प्रयागे नैमिषेऽपि वा॥
शालग्रामे च गोकर्णे गयायाञ्च विशेषतः।
क्षेत्रेष्वेतेषु यः श्राद्धं पितृभक्तिसमन्वितः॥

* पयोष्ण्यमरकण्टके,—इति मु०।

करोति विधिना सम्यक् स गयायां विधीयते"—इति ॥

बृहस्पतिरपि,—

"काङ्क्षन्ति पितरः पुत्रान्नरकापातभीरवः ।
गयां यास्यति यः कश्चित् सोऽस्मान् सन्तारयिष्यति ॥
करिष्यति वृषोत्सर्गमिष्टापूर्तं तथैव च ।
पालयिष्यति वृद्धत्वे श्राद्धं दास्यति चान्वहम् ॥
गयायां धर्मपृष्ठे च सदसि ब्रह्मणस्तथा ।
गयाशीर्षे वटे चैव पितॄणां दत्तमक्षयम्"—इति ॥

विष्णुरपि,—

"गयाशीर्षे वटे चैव तीर्थे चामरकण्टके इति ।

यत्र क्वचन नर्मदातीरे यमुनातीरे गङ्गायां विशेषतो गङ्गाद्वारे प्रयागे गङ्गासागरसङ्गमे कुशावर्ते बिल्वके नीलपर्वते कुब्जाम्रे भृगुतुङ्गे केदारे महालये ललितायां सुगन्धायां शाकम्भर्यां फल्गुतीर्थे महागङ्गायां तण्डुलिकाश्रमे कुमारधारायां प्रभासे यत्र क्वचन सरस्वत्यां विशेषतो नैमिषारण्ये वाराणस्यामगस्त्याश्रमे कण्वाश्रमे कौशिक्यां सरयूतीरे शोणस्य ज्योतीरथायाश्च सङ्गमे श्रीपर्वते कालोदके उत्तरमानसे वडवायां सप्तर्षौ विष्णुपदे स्वर्गमार्गप्रदेशे गोदावर्यां गोमत्यां वेत्रवत्यां विपाशायां वितस्तायां शतद्रुतीरे चन्द्रभागायामैरावत्यां सिन्धोस्तीरे दक्षिणे पञ्चनदे औजसे एवमादिष्वन्येषु तीर्थेषु सरिद्वरासु सङ्गमेषु प्रभवेषु पुलिनेषु प्रस्रवणेषु पर्वतनिकुञ्जेषु वनेषूपवनेषु च गोमयेनोपलिप्तेषु गृहेषु च इति । अथापि पितृगाथा भवन्ति,—

कुलेऽस्माकं स जन्तुः स्याद्यो नो दद्याज्जलाञ्जलिम्।
नदीषु बहुतोयासु शीतलासु विशेषतः॥
अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः।
गयाशीर्षे वटे श्राद्धं यो नो दद्यात्समाहितः॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत्"—इति॥

गयाशीर्षप्रमाणञ्चादिपुराणेऽभिहितम्,—

"पञ्चक्रोशं गयाक्षेत्रं क्रोशमात्रं गयाशिरः।
महानद्याः पश्चिमेन यावद्गृध्रेश्वरो गिरिः॥
उत्तरे ब्रह्मयूपस्य यावद्दक्षिणमानसम्।
एतद्गयाशिरो नाम पितृलोकेषु विश्रुतम्"—इति॥

श्राद्धकालास्त्वमावास्याऽष्टकादयः। तदाह याज्ञवल्क्यः,—

"अमावास्याऽष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम्।
द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्यसंक्रमः॥
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः"—इति॥

यस्मिन्दिने चन्द्रमा न दृश्यते, सा अमावास्या। तत्र श्राद्धं नित्यम्। तथाच लौगाक्षिः,—

"श्राद्धं कुर्यादवश्यन्तु प्रमीतपितृको द्विजः।
इन्दुक्षये मासि मासि वृद्धौ प्रत्यब्दमेव च"—इति॥

अष्टकास्तिस्रः मार्गशीर्षादिचतुष्टयापरपक्षाष्टम्यः। "हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टम्योऽष्टकाः"—इति गौतमस्मरणात्। तथापि

श्राद्धं नित्यम्। तदाह पितामहः,—

"अमावास्याव्यतीपातपौर्णमास्यष्टकासु च।

विद्वान् श्राद्धमकुर्वाणः प्रायश्चित्तीयते तु सः"—इति ॥

वृद्धिः पुत्रजन्मादिः, तेन तद्विशिष्टः कालो लक्ष्यते। कृष्णपक्षो-ऽपरपक्षः। अयनद्वयं दक्षिणायनमुत्तरायणञ्च। द्रव्यं कृष्णमांसादि, ब्राह्मणः श्रुताध्ययनसम्पन्नः, तयोः सम्पत्तिर्लाभो यस्मिन् काले स तथोक्तः। विषुवन्मेषतुलासंक्रान्ती। सूर्यसंक्रमः सूर्यस्य राशेराश्यन्तरप्राप्तिः। सूर्यसंक्रमशब्देनैवायनविषुवतोरुपादाने सिद्धे पृथगुपादानं फलातिशयज्ञापनार्थम्। व्यतीपातो योगविशेषः, महाव्यतीपातो वा।

"सिंहस्थौ गुरुभौमौ चेत्कर्कटे च रवौ हि वा।

द्वादशी हस्तसंयुक्ता व्यतीपातो महान्हि सः ॥

श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तकैः।

यद्यमा रविवारेण व्यतीपातः स उच्यते"—इति

वृद्धमनुवचनात्। नागदैवतमश्लेषानक्षत्रं, मस्तकं मृगशिरः। यद्यमा अमावास्या रविवारेण श्रवणादीनामन्यतमेन नक्षत्रेण युक्ता, स व्यतीपात इत्यर्थः। गजच्छायालक्षणं शास्त्रान्तरे दर्शितम्,—

"यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः।

याम्या तिथिर्भवेत्सा हि गजच्छाया प्रकीर्त्तिता"—इति ॥

पितृदैवत्यं मघानक्षत्रं, हंसः सूर्यः, करो हस्तनक्षत्रं, याम्या तिथि-स्त्रयोदशी। पुराणेऽपि,—

"हंसे हस्तस्थिते या तु मघायुक्ता त्रयोदशी।

तिथिर्वैवस्वती नाम सा छाया कुञ्जरस्य तु"—इति ॥

ग्रहणं चन्द्रसूर्य्ययोरिति यच्चन्द्रसूर्य्योपरागः। तत्रापि कालविशेषः श्राद्धानुकूल्येन स्वीकार्य्यः। तदाह वृद्धवसिष्ठः,—

"चिरमाः सर्व्वसमये तृप्यन्ति पितरस्तथा।

मनुष्या मध्यकाले तु मोक्षकाले तु राक्षसाः"—इति ॥

श्राद्धं प्रतिपद्धिरिति यदा श्राद्धं प्रतीच्छा तदैव कर्त्तव्यमिति। चकारेणान्येऽपि श्राद्धकालाः संगृह्यन्ते। अतएव यमः,—

"आषाढ्यामथ कार्त्तिक्यां माघ्यां त्रीन् पञ्च वा दिनान्।

तर्प्पयेत्पितृपूर्व्वंस्तु तदक्षय्यमुच्यते"—इति ॥

देवलोऽपि,—

"तृतीया रोहिणीयुक्ता वैशाखस्य सिता तु या।

मघाभिः सहिता कृष्णा नभस्ये तु त्रयोदशी ॥

तथा शतभिषग्युक्ता कार्त्तिके नवमी तथा।

इन्दुक्षयगजच्छायावैधृतेषु युगादिषु ॥

एते कालाः समुद्दिष्टाः पितॄणां प्रीतिवर्द्धनाः"—इति।

युगाद्योऽपि श्राद्धकालाः। ते च मत्स्यपुराणे दर्शिताः,—

"वैशाखस्य तृतीया तु नवमी कार्त्तिकस्य तु।

माघे पञ्चदशी चैव नभस्ये च त्रयोदशी ॥

युगाद्यः स्मृता ह्येता दत्तस्याक्षयकारकाः"—इति।

विष्णुपुराणेऽपि,—

"वैशाखमासस्य च या तृतीया

नवम्यसौ कार्त्तिकशुक्लपक्षे।

गजच्छायायां च कृष्णपक्षे
त्रयोदशी पञ्चदशी च माघे ॥
पानीयमप्यत्र तिलैर्विमिश्रं
दद्यात् पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समासहस्रं
रहस्यमेतत् पितरो वदन्ति"—इति ॥

मन्वादयोऽपि श्राद्धकालाः । तदुक्तं मत्स्यपुराणे,—

"अश्वयुक्शुक्लनवमी कार्त्तिके द्वादशी सिता ।
तृतीया चैव माघस्य सिता भाद्रपदस्य च ॥
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी सिता ।
आषाढस्यापि दशमी माघमासस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा तथाऽऽषाढी च पूर्णिमा ।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता ॥
मन्वन्तरादयश्चैते दत्तस्याक्षयकारकाः"—इति ।

कृत्तिकादिनक्षत्राणि काम्यश्राद्धकालाः । तथाच याज्ञवल्क्यः,—

"स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा ।
पुत्रं श्रैष्ठ्यं च सौभाग्यं समृद्धिं मुख्यतां शुभाम् ॥
प्रवृत्तचक्रतां चैव वाणिज्यप्रभृतीनपि ।
अरोगित्वं यशो वीतशोकतां परमां गतिम् ॥
धनं वेदान् भिषक्सिद्धिं कुप्यं गा अप्यजाविकम् ।
अश्वानायुश्च विधिवद् यः श्राद्धं संप्रयच्छति ॥
कृत्तिकादिभरण्यन्तं स कामानाप्नुयादिमान्"—इति ।

मार्कण्डेयोऽपि,—

"कृत्तिकासु पितॄनर्च्य स्वर्गमाप्नोति मानवः ।
अपत्यकामो रोहिण्यां सौम्ये तेजस्वितां लभेत् ॥
आर्द्रायां शौर्यमाप्नोति क्षेत्रादि तु पुनर्वसौ ।
पुष्टिं पुष्ये पितॄनर्च्य अश्लेषासु वरान् सुतान् ॥
मघासु स्वजनश्रैष्ठ्यं सौभाग्यं फल्गुनीषु च ।
प्रदानशीलो भवति सापत्यश्चोत्तरासु च ॥
प्राप्नोति श्रेष्ठतां सत्सु हस्ते श्राद्धप्रदो नरः ।
रूपवन्ति च चित्रासु तथापत्यान्यवाप्नुयात् ॥
वाणिज्यलाभदाः स्वाती विशाखाः पुत्रकामदाः* ।
कुर्वतामनुराधासु ददुश्चक्रप्रवर्त्तनम् ॥
ज्येष्ठास्वथाधिपत्यञ्च मूले आरोग्यमुत्तमम् ।
आषाढासु यशःप्राप्तिरुत्तरासु विशोकता ॥
श्रवणे च शुभाँल्लोकान् धनिष्ठासु धनं महत् ।
वेदवित्त्वाऽभिजिति तु भिषक्सिद्धिञ्च वारुणे ॥
अजाविकं प्रौष्ठपदे विन्देद्गावीं तथोत्तरे ।
रेवतीषु तथा रौप्यमश्विनीषु तुरङ्गमान् ॥
श्राद्धं कुर्वंस्तथाऽऽप्नोति भरणीष्वायुरुत्तमम् ।
तस्मात्काम्यानि कुर्वीत ऋक्षेष्वेतेषु तत्त्ववित्"—इति ॥

सौम्ये सोमदैवत्ये मृगशीर्षमित्यर्थः । चक्रप्रवर्त्तनं सर्वेषामाज्ञायाः प्रतिघाताभावेन प्रवर्त्तनम् । अभिजित् अभिजित्संज्ञकं नक्षत्रम् ।

---

* वाणिज्यफलदा स्वाती विशाखा पुत्रकामदा,—इति मु० ।

श्रुतिः। "उपरिष्टादाषाढानामवस्तात् श्रोणायाः"—इति। तत्तु वेधनिरूपणम्। भिषक्सिद्धिरौषधफलावाप्तिः। वाहनं स्वाभिमत-गमनम्। कुप्यं त्रपुसीसादिकम्*। विष्णुरपि। "स्वर्गं कृत्तिका-स्वपत्यं रोहिणीषु ब्रह्मवर्च्चसं सौम्ये कर्म्मसिद्धिं रौद्रे भुवं पुनर्व्वसौ पुष्टिं पुष्ये श्रियं सार्पे सर्व्वान् कामान् पित्र्ये सौभाग्यं फल्गुनीषु धनमार्य्यम्णे ज्ञातिश्रैष्ठ्यं हस्ते रूपवतः सुतांस्त्वाष्ट्रे वाणिज्य-सिद्धिं स्वातौ कनकं विशाखासु मित्राणि मैत्रे शाक्रे राज्यं कृषिं मूले समुद्रयानसिद्धिं आप्ये सर्व्वान् कामान् वैश्वदेवे श्रैष्ठ्यमभिजिति सर्व्वान् कामाञ्छ्रवणे बलं वासवे आरोग्यं वारुणे कुप्यद्रव्यमाजे गृहमहिर्बुध्न्ये गाः पौष्णे तुरङ्गमानश्विने जीवितं याम्ये†"—इति।

आदित्यादिवाराश्च काम्यश्राद्धकालाः। तदाह विष्णुः। "सततमा-दित्येऽह्नि श्राद्धं कुर्व्वन्नारोग्यमाप्नोति सौभाग्यं चान्द्रे समरविजयं कौजे सर्व्वान् कामान् बौधे विद्यामभीष्टां जैवे धनं शौक्रे जीवितं शनैश्चरे"। कूर्म्मपुराणेऽपि,—

> "आदित्यवारे त्वारोग्यं चन्द्रे सौभाग्यमेव च।
> कुजे सर्व्वत्र विजयं सर्व्वान् कामान् बुधस्य तु॥
> विद्यां विशिष्टाञ्च गुरौ धनं वै भार्गवे पुनः।
> शनैश्चरे भवेदायुरारोग्यञ्च सुदुर्लभम्"—इति॥

विष्णुधर्म्मोत्तरे,—

> "अतः काम्यानि वक्ष्यामि श्राद्धानि तव पार्थिव।

---

* क्वचित्,—इत आरभ्य दत्तस्तोमपदं नास्ति मुद्रितातिरिक्तपुस्तकेषु।

† याम्ये,—इति मु०।

आरोग्यमथ सौभाग्यं समरे विजयं तथा ॥
सर्वकामांस्तथा विद्यां धनं जीवितमेव च ।
आदित्यादिदिनेष्वेवं श्राद्धं कुर्वन् सदा नरः ॥
क्रमेणैतान्यवाप्नोति मात्र कार्य्या विचारणा”—इति ॥

प्रतिपदादितिथयोऽपि काम्यश्राद्धकालाः । तदाह मनुः,—

“कुर्वन् प्रतिपदि श्राद्धं सुरूपाँल्लभते सुतान् ।
कन्यकान्तु द्वितीयायां तृतीयायान्तु वन्दिनः* ॥
पशून् क्षुद्रांश्चतुर्थ्यान्तु पञ्चम्यां शोभनान् सुतान् ।
षष्ठ्यां द्युतिं† कृषिञ्चैव सप्तम्यां लभते नरः ॥
अष्टम्यामपि वाणिज्यं लभते श्राद्धदः सदा ।
स्यान्नवम्यामेकखुरं दशम्यां द्विखुरं बहु ॥
एकादश्यां तथा रूप्यं ब्रह्मवर्चस्विनः सुतान् ।
द्वादश्यां जातरूपन्तु रजतं रूप्यमेव च ॥
ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यान्तु सुप्रजाः ।
प्रीयन्ते पितरश्चास्य ये शस्त्रेण रणे हताः ॥
श्राद्धदः पञ्चदश्यान्तु सर्व्वान् कामान् समश्नुते”—इति ।

याज्ञवल्क्योऽपि,—

“कन्यां कन्यावेदिनश्च पशून् क्षुद्रान् सुतानपि‡ ।
द्यूतं कृषिञ्च वाणिज्यं तथैकद्विशफानपि§ ॥

* सम्पदः,—इति मु० ।
† द्यूतं,—इति सो० ना० पु० । एवं परत्र ।
‡ पशून् वै सत्सुतानपि,—इति मु० ।
§ द्विशफैकशफांस्तथा,—इति मु० ।

ब्रह्मवर्चस्विनः पुत्रान् स्वर्णरूप्ये सकुप्यके ।
ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा ॥
प्रतिपत्प्रभृति ह्येकां वर्जयित्वा चतुर्दशीम् ।
शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते"—इति ॥

कन्यावेदिनो जामातरः। एतानि फलानि कृष्णपक्षप्रतिपत्प्रभृतिष्वमावास्यापर्यन्तासु तिथिषु श्राद्धदः क्रमेण प्राप्नोति। अतएव कात्यायनः। "स्त्रियः प्रतिरूपाः प्रतिपदि द्वितीयायां तृतीयायां चतुर्थ्यां क्षुद्रपशवः पुत्राः पञ्चम्यां द्यूतं षष्ठ्यां कृषिः सप्तम्यां वाणिज्यमष्टम्यामेकशफं नवम्यां दशम्यां गावः परिचारका एकादश्यां द्वादश्यां धनधान्यरूप्यं ज्ञातिश्रैष्ठ्यं हिरण्यानि त्रयोदश्यां युवानस्तत्र* म्रियन्ते शस्त्रहताश्चतुर्दश्याममावास्यायां सर्वम्"—इति। अथच कृष्णपक्षप्रतिपदादितिथिषु श्राद्धविधिः सर्वेष्वेवापरपक्षेषु, न भाद्रपदापरपक्षएव। अतएव शौनकः। "प्रौष्ठपद्या अपरपक्षे मासि मासि चैवम्"—इति। आपस्तम्बोऽपि। "सर्वेष्वेवापरपक्षस्याहःसु क्रियमाणे पितॄन् प्रीणाति कर्तुस्तु कालनियमात्फलविशेषः प्रथमेऽहनि क्रियमाणे स्त्रीप्रायमपत्यं जायते द्वितीये स्तेनास्तृतीये ब्रह्मवर्चस्विनः चतुर्थे क्षुद्रपशुमान् पञ्चमे पुमांसो बह्वपत्यो न चानपत्यः प्रमीयते षष्ठेऽध्वशीलोऽक्षशीलश्च सप्तमे कर्षे राद्धिः अष्टमे पुष्टिः नवमे एकखुराः दशमे व्यवहारे राद्धिः एकादशे कृष्णायसं त्रपु सीसं द्वादशे पशुमान् त्रयोदशे बहुपुत्रो बहुमित्रो दर्शनीयापत्यो-

---

* युवानस्तत्र,—इति मु० ।

‡ प्रजायते,—इति मु० ।

सुवमादिवस्तु भवन्ति चतुर्दशे भाव्ये राद्धिः पञ्चदशे पुष्टिः”—इति । भाद्रपदापरपक्षविषये मार्कण्डेयः,—

“कन्यागते सवितरि दिनानि दश पञ्च च ।
पार्वणेनैव विधिना तत्र श्राद्धं विधीयते ॥
प्रतिपद्धनलाभाय द्वितीया द्विपदप्रदा ।
वरार्थिनां तृतीया च चतुर्थी शत्रुनाशिनी ॥
श्रियं प्राप्नोति पञ्चम्यां षष्ठ्यां पूज्यो भवेन्नरः ।
गणाधिपत्यं सप्तम्यामष्टम्यां बुद्धिमुत्तमाम् ॥
स्त्रियो नवम्यां प्राप्नोति दशम्यां पूर्णकामताम् ।
वेदांस्तथाऽऽप्नुयात्सर्वानेकादश्यां क्रियापरः ॥
द्वादश्यां हेमलाभञ्च प्राप्नोति पितृपूजकः ।
प्रजां मेधां पशून् पुष्टिं स्वातन्त्र्यं वृद्धिमुत्तमाम् ॥
दीर्घमायुरथैश्वर्यं कुर्वाणस्तु त्रयोदशीम् ।
अवाप्नोति न सन्देहः श्राद्धं श्रद्धापरो नरः ॥
युवानः पितरो यस्य मृताः शस्त्रेण वै हताः ।
तेन कार्यं चतुर्दश्यां तेषां तृप्तिमभीप्सता ॥
श्राद्धं कुर्वन्नमावास्यामन्येन पुरुषः शुचिः ।
सर्वान् कामानवाप्नोति स्वर्गवासं समश्नुते”—इति ॥

नभस्य कृष्णपक्षप्रतिपत्प्रभृतिदशपञ्चदिनानि कृत्स्नोऽपरपक्षः सवितरि कन्यागते सति महालय इति प्रोक्तः । तत्र पार्वणेनैव विधिना श्राद्धं कुर्यात् । तदाह वृद्धमनुः,—

“नभस्यस्यापरः पक्षो यत्र कन्यां व्रजेद्रविः ।

स महालयसंज्ञः स्यान्मघाश्चाऽऽश्वयुजस्तथा"—इति ॥

यत्तु शाट्यायनिनोक्तम्*,—

"नभस्यस्यापरे पक्षे तिथिषोडशकन्तु यत् ।

कन्यास्थार्कान्वितं चेत् स्यात् स कालः श्राद्धकर्मणः"—इति ॥

तत्तिथिवृद्ध्याधिकदिवसेऽपि श्राद्धं कुर्यान्न तु पञ्चदशदिनेष्वेवे-त्यनेनाभिप्रायेण । अथवा । आश्वयुजः शुक्लप्रतिपदा सह नभस्या-परपक्षस्य षोडशदिनात्मकत्वं, तस्या अपि सौरचान्द्रमासविशेषेणापर-पक्षानुप्रवेशस्य सम्भवात् । तदाह देवलः,—

"अतःषोडशकं यत्तु शुक्लप्रतिपदा सह ।

चन्द्रक्षयाविशेषेण साऽपि दर्शात्मिका स्मृता"—इति ॥

अन्वेतस्मिन्पक्षे, दिनानि दश पञ्च चेति वचनस्य का गतिः ? उच्यते । द्वादशसु कपालेष्वष्टाकपालवत् षोडशसु दिवसेषु पञ्चदश-दिनवचनमवयुत्यानुवादो भविष्यति[१] । अथवा । पञ्चदशदिवस-

* शाट्यायनेनोक्तम्,—इति मु० ।

(१) अस्ति जातेष्टिः "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते"—इत्यनेन विहिता । तत्रेदमाम्नायते । "यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालस्त्रिवृतैवास्मिंस्तेजो दधाति, यद्दश-कपालो विराजैवास्मिन्नन्नाद्यं दधाति, यदेकादशकपालस्त्रिष्टुभैवा-स्मिन्निन्द्रियं दधाति, यद्द्वादशकपालो भवति जगत्यैवास्मिन् पशून् दधाति, यस्मिन् जात एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति"—इति । तत्र वाक्यभेदभयादष्टाकपाला-दीनि अन्तराणि न सन्ति, किन्तु द्वादशकपालान्तर्वर्तिनामष्टा-कपालादीनामवयुत्यानुवादेन तत्र तत्र फलवादकीर्तनद्वारेण प्रकृता द्वादशकपाला वैश्वानरेष्टिरेवैवं स्तूयते इति मीमांसाप्रथमाध्याय-चतुर्थपादस्थैकादशाधिकरणे सिद्धान्तितम् । तद्वदत्राप्यवगन्तव्य-मिति भावः ।

षोडशदिवसविस्तीर्णोविषयवद्विकल्पोऽस्तु। नभस्यापरपक्षस्य कन्या-
स्थार्कान्वितत्वेन प्रशस्ततरत्वोच्यते, तदभावेऽपि तस्य प्रशस्तत्वात्।
तदाह जाबालिः,—

"अगतेऽपि रवौ कन्यां श्राद्धं कुर्व्वीत सर्व्वथा।
आषाढ्याः पञ्चमः पक्षः प्रशस्तः पितृकर्म्मसु॥
पुत्रानायुस्तथाऽऽरोग्यमैश्वर्य्यमतुलं तथा।
प्राप्नोति पञ्चमे दत्त्वा श्राद्धं कामांस्तथाऽपरान्"—इति॥

वृद्धमनुरपि,—

"आषाढीमवधिं कृत्वा पञ्चमं पक्षमाश्रिताः।
काङ्क्षन्ति पितरः क्लिष्टा अन्नमप्यन्वहं जलम्॥
तस्मात्तत्रैव दातव्यं दत्तमन्यत्र निष्फलम्।
आषाढीमवधिं कृत्वा यः पक्षः पञ्चमो भवेत्॥
तत्र श्राद्धं प्रकुर्व्वीत कन्यस्थोऽर्को भवेन्न वा"—इति॥

अस्य पक्षस्य रवेः कन्यागतत्वेन प्रशस्ततरत्वमादिपुराणे दर्शितम्,—

"पक्षान्तरेऽपि कन्यास्थे रवौ श्राद्धं प्रशस्यते।
कन्यागते पञ्चमे तु विशेषेणैव कारयेत्"—इति॥

वृद्धगौतमोऽपि,—

"कन्यागते सवितरि यान्यहानि तु षोडश।
क्रतुभिस्तानि तुल्यानि सम्पूर्णवरदक्षिणैः"—इति॥

शाट्यायनिरपि,—

"पुण्यः कन्यागतः सूर्यः पुण्यः पक्षश्च पञ्चमः।
कन्यास्थार्कान्वितः पक्षः सोऽत्यन्तं पुण्यउच्यते"—इति॥

तत्राप्यशक्तावपि पञ्चमपक्षस्य पञ्चमीमारभ्यामावास्यापर्य-न्तासु तिथिष्वनिषिद्धास्वेकस्यां तिथौ यथासम्भवं सकृच्छ्राद्धं कुर्यात् । तदाह यमः,—

"हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन् ।
पञ्चम्योरन्तरे दद्यात् उभयोरपि पक्षयोः"—इति ॥

अथाशक्त्यादिना पञ्चमपक्षे श्राद्धाकरणे यावत् कन्याराशौ सूर्य-स्तिष्ठति तावच्छ्राद्धं दद्यात्, तत्राप्यकरणे यावद् वृश्चिकदर्शनमिति । तदाह सुमन्तुः,—

"कन्याराशौ महाराज, यावत्तिष्ठेद्विभावसुः ।
तस्मात्कालाद्भवेदेवं वृश्चिकं यावदागतम्"—इति ॥

पुराणेऽपि,—

"कन्यागते सवितरि पितरो यान्ति वै सुतान् ।
शून्या प्रेतपुरी सर्वा यावद्वृश्चिकदर्शनम् ॥
ततो वृश्चिकसंप्राप्तौ निराशाः पितरो गताः ।
पुनः स्वभवनं यान्ति शापं दत्त्वा सुदारुणम् ॥
सर्वे कन्यागते श्राद्धं यो न कुर्याद्गृहाश्रमी ।
धनं पुत्राः कुतस्तस्य पितृनिश्वासपीडनात् ॥
वृश्चिके समतिक्रान्ते पितरो दैवतैः सह ।
निःश्वस्य प्रतिगच्छन्ति शापं दत्त्वा सुदारुणम्"—इति ॥

आदिपुराणेऽपि,—

"प्राक्कृतौ यमः प्रेतान् पितॄंश्चापि यमालयात् ।
विसर्जयति मानुष्ये कृत्वा शून्यं स्वकं पुरम् ॥

क्षुधार्त्ताः कीर्त्तयन्तश्च दुष्कृतञ्च स्वयं कृतम्।
काङ्क्षन्तः पुत्रपौत्रेभ्यः पायसं मधुसंयुतम्॥
तस्मात्तांस्तत्र विधिना तर्पयेत् पायसेन तु।
मध्वाज्यतिलमिश्रेण तथा शीतेन वाम्भसा॥
शाकमात्रं परस्माद्वा यः प्राप्नुयान्नरः।
भिक्षामात्रेण यः प्राणान् सन्धारयति वा स्वयम्॥
यो वा संवर्द्धने देहं प्रत्यहं स्वात्मविक्रयात्।
श्राद्धन्तेनापि कर्त्तव्यं तैस्तैर्द्रव्यैः सुसञ्चितैः"—इति॥

यमालयादिवर्ज्जयित्वा स्वकं पुरं शून्यं कृत्वा मनुष्यलोके पितृन् वाञ्छतीत्यध्याहृत्य योजना। पायसं काङ्क्षन्तः पितरस्तिष्ठन्तीत्यध्याहारः। तत्र वर्ज्यानाह गार्ग्यः,—

"नन्दायां भार्गवदिने चतुर्दश्यां त्रिजन्मनि।
एषु श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात्"—इति॥

वृद्धगार्ग्योऽपि,—

"प्राजापत्ये तु पौष्णे च पित्र्यर्क्षे भार्गवे तथा।
यस्तु श्राद्धं प्रकुर्वीत तस्य पुत्रो विनश्यति"—इति॥

प्राजापत्यं रोहिणी, पौष्णं रेवती, पित्र्यं मघा। अङ्गिरा अपि,—

"त्रयोदश्यां कृष्णपक्षे यः श्राद्धं कुरुते नरः।
पञ्चत्वं तस्य जानीयात् ज्येष्ठपुत्रस्य निश्चितम्॥
मघासु कुर्वतः श्राद्धं ज्येष्ठः पुत्रो विनश्यति"—इति।

अत्र मघात्रयोदश्यां श्राद्धनिषेधः केवलपितृवर्गविषयः। नतु केवलपितृवर्गोद्देशेन श्राद्धप्राप्तौ सत्यां तन्निषेधो युक्तः,—

"पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम् ।
अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत्"—इति

धौम्यवचनेन वैकल्पिकैकवर्गोद्देशश्राद्धनिषेधाशङ्कैव नास्ति, यतो नैवं व्यवस्था विवक्ष्यते इति । नैवं, तस्यामपि धौम्यस्मृतौ श्रामोक्तादेव प्राप्तस्यैकवर्गश्राद्धस्य निषेधात् । यथा रागप्राप्तस्य कलञ्जभक्षणस्य, "न कलञ्जं भक्षयेत्"—इति निषेधस्तद्वत् । अतएव कार्ष्णाजिनिः,—

"श्राद्धन्तु नैकवर्गस्य चतुर्दश्यामुपक्रमेत् ।
अष्टकासु च यः कुः प्रजां हिंसन्ति तत्र ते"—इति ॥

स्मृत्यन्तरमपि,—

"इच्छेत् चतुर्दशीश्राद्धं पुत्रवान् यः सुतायुषोः ।
एकस्यैव तु नो दद्यात् पार्वणन्तु समाचरेत्"—इति ॥

यः पुत्रवान् सुतायुषोरभिवृद्धिमिच्छेत्, स एकस्यैकवर्गस्यैव श्राद्धं नो दद्यात्, अपि तु मातामहवर्गोद्देशेनापि पार्वणं समाचरेदित्यर्थः । तस्मादेकवर्गोद्देशेनैव मघाचतुर्दश्योः श्राद्धनिषेधो न तु श्राद्धस्यैव, तत्र श्राद्धस्य प्रशस्तत्वात् । तथाच मनुः,—

"प्रोष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् ।
प्राप्य श्राद्धन्तु कर्त्तव्यं मधुना पायसेन च ॥
प्रजामिष्टां यशः स्वर्गमारोग्यञ्च धनं तथा ।
नृणां श्राद्धे सदा प्रीताः प्रयच्छन्ति पितामहाः"—इति ॥

महाभारतेऽपि,—

"ज्ञातीनामुत्तरे श्रेष्ठः कुर्वन् श्राद्धं त्रयोदशीम् ।
नावश्यन्तु युवानोऽस्य प्रमीयन्ते नरा गृहे"—इति ॥

अथ मघात्रयोदश्यां श्राद्धे पिण्डनिर्वपणं न कुर्यात्, तस्यां युगादित्वेन पिण्डनिर्वपणनिषेधात्। तथा च पुलस्त्यः,—

"अयनद्वितये श्राद्धं विषुवद्वितये तथा।
युगादिषु च सर्वासु पिण्डनिर्वपणादृते"—इति॥

कर्त्तव्यमित्यध्याहारः। मघाऽन्वितत्वेनापि पिण्डनिर्वपणं नास्ति। तथा चादिपुराणे,—

"संक्रान्तावुपरागे च पारणे च भारत।
मघायां पिण्डदानेन ज्येष्ठः पुत्रो विनश्यति"—इति॥

चतुर्दश्यां श्राद्धनिषेधोऽशस्त्रहतविषयः। शस्त्रहतानान्तु चतुर्दश्यामपि श्राद्धं कार्यम्। तदाह मरीचिः,—

"विषशस्त्रश्वापदाहितिर्यग्ब्राह्मणघातिनाम्।
चतुर्दश्यां क्रिया कार्या अन्येषान्तु विगर्हिता"—इति॥

प्रचेता अपि,—

"वृक्षारोहणलौहादिविद्युज्जलविषादिभिः।
नखिदंष्ट्रिविपन्नानामेषां शस्ता चतुर्दशी"—इति॥

याज्ञवल्क्योऽपि,—

"शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते"—इति॥

अत्र चतुर्दश्यां शस्त्रादिहतानामेवेति नियम्यते, न पुनश्चतुर्दश्यामेवेति। इदञ्च सति, दिनान्तरेऽपि पितामहादिभिस्त्रिभिः सार्धं महा-लयश्राद्धं कार्यम्। चतुर्दश्यां महालयश्राद्धस्यैकोद्दिष्टत्वेन विहितत्वात् तेनात्र पितामहादिसम्बन्धाभावात्। तच्चैकोद्दिष्टरूपत्वं ब्रह्मपुराणे,—

"समत्वमागतस्यापि पितुः शस्त्रहतस्य तु।

एकोद्दिष्टं सुतैः कार्यं चतुर्दश्यां मघासु च"—इति ॥

शस्त्रहतस्य सपिण्डीकृतस्य ब्रह्महतस्य पितुश्चतुर्दश्यां मघासु च सुतैरेकोद्दिष्टश्राद्धं कार्यमित्यर्थः । यत्र पितामहोऽपि शस्त्रादिना हतः, तेन द्वयोरपि चतुर्दश्यामेकोद्दिष्टश्राद्धं कार्यम् । तथाच स्मृत्यन्तरम् । "एकस्मिन्द्वयोर्वैकोद्दिष्टविधिः"—इति । अयमर्थः । एकस्मिन्पितरि शस्त्रादिना हते, द्वयोर्वा पितृपितामहयोः शस्त्रादिना हतयोश्चतुर्दश्यां पुत्रेण तयोः प्रत्येकमेकोद्दिष्टश्राद्धं कार्यमिति । यत्र पितृपितामहप्रपितामहास्त्रयोऽपि शस्त्रहताः, तेन चतुर्दश्यां पार्वणेनैव विधिना श्राद्धं कार्यम् । एकस्मिन्द्वयोर्वैकोद्दिष्टविधिरिति विशेषोपादानात् । इदञ्च चन्द्रिकाकारापरार्कयोर्मतम् । त्रिष्वपि पित्रादिषु शस्त्रहतेषु त्रयाणामपि पृथक् पृथगेकोद्दिष्टमेव कार्यमिति देवस्वामिमतम् । अत्र त्रयाणां शस्त्रहतत्वे पार्वणश्राद्धस्य साक्षाद्विधायकवचनाभावादेकस्मिन्द्वयोर्वेत्युपलक्षणार्थत्वेनाप्युपपत्तेरेकोद्दिष्टत्रयमेव कार्यमिति देवस्वामिमतं युक्तमिति प्रतिभाति । शस्त्रादिहतानां दिनान्तरे पार्वणविधिनैव श्राद्धं कार्यम् । अतएव प्रजापतिः,—

"संक्रान्तावुपरागे च पर्वोत्सवमघासु च ।
निर्वपेद्दत्तपिण्डांस्त्रीनिति प्राह प्रजापतिः"—इति ॥

आत्मभगिन्यादीनां महालयश्राद्धमेकोद्दिष्टविधानेन कार्यम् । तथाच सुमन्तुः,—

"सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते ।
भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च ॥
मित्राय गुरवे श्राद्धमेकोद्दिष्टं न पार्वणम्"—इति ।

आपस्तम्बोऽपि,—

"अपुत्रा ये मृताः केचित् स्त्रियश्च पुरुषाश्च ये ।

तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम्"—इति ।

स्त्रियो भगिन्याद्यः, पुरुषा भ्रात्राद्यः । कात्यायनोऽपि,—

"अमान्निवान्नवादीनामेकोद्दिष्टन्तु सर्वदा"—इति ।

यानि पुनरेकोद्दिष्टनिषेधकानि वाक्यानि, यथा सपिण्डीकरणं प्रकृत्य जातूकर्ण्यः,—

"ततऊर्द्ध्वं न कर्तव्यमेकोद्दिष्टं कदाचन ।

सपिण्डीकरणान्तञ्च तस्योक्तमिति सूरिभिः ।

प्रेतत्वमेव निस्तीर्णः प्राप्तः पितृगणन्तु सः ॥

च्यवते पितृलोकात्तु पृथक्पिण्डे नियोजितः ।

सपिण्डीकरणादूर्ध्वं पृथक्त्वं नोपपद्यते ॥

पृथक्त्वे तु कृते पश्चात्पुनः कार्या सपिण्डता"—इति ।

कार्ष्णाजिनिरपि,—

"ततऊर्द्ध्वं न कर्तव्यमेकोद्दिष्टं कदाचन ।

सपिण्डीकरणान्तञ्च प्रेतस्यैतदमङ्गलम्"—इति ।

यमोऽपि,—

"यः सपिण्डीकृतं प्रेतं पृथक्पिण्डे नियोजयेत् ।

विधिघ्नस्तेन भवति पितृहा चोपजायते"—इति ॥

पुराणेऽपि,—

"प्रदानं यत्र यत्रैषां सपिण्डीकरणात्परम् ।

तत्र पार्वणवच्छ्राद्धमेकोद्दिष्टं त्यजेद्बुधः"—इति ॥

तानि सर्वाण्यपि प्रतिपदोमैकोद्दिष्टविषयाणि द्रष्टव्यानि । एतच्छ्राद्धं सूतकादिना मुख्यकालातिक्रमे तदाशौचापगमानन्तरकाल एव कार्यम् । तदाह ऋष्यशृङ्गः,—

"देये पितॄणां श्राद्धे तु आशौचं जायते यदा ।
आशौचे तु व्यतिक्रान्ते तेभ्यः श्राद्धं प्रदीयते"—इति ॥

मरीचिवचनम्,—

"तदहश्चेन्न कुर्वीत केनचित्सूतकादिना ।
सूतकानन्तरं कुर्यात् पुनस्तदहरेव वा"—इति ॥

सूतकानन्तरकाले वा अनन्तरे वा मासि तत्पक्षे तत्तिथौ वेति पक्षद्वयमुपन्यस्तं, तत्राद्ये पक्षे विरोध एव नास्ति, पुनस्तदहरेव वेत्ययं पक्षः सूतकव्यतिरिक्तनिमित्तान्तरेण विघ्ने समुत्पन्ने प्रतिमासं चयाद्वे विहितैकोद्दिष्टमासिकश्राद्धविषय इति ऋष्यशृङ्गवचनाविरोधाय व्यवस्थाप्यते । अतएव देवलः,—

"एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते ।
अन्यस्मिंस्तत्तिथौ तस्मिन् श्राद्धं कुर्यात्प्रयत्नतः"—इति ॥

अन्यस्मिन्ननन्तरे मासि तत्तिथौ मृततिथौ, तस्मिन् शुक्ले कृष्णे वा मृतसम्बन्धिपक्षे श्राद्धं विघ्नवशात्कुर्यादित्यर्थः । आशौचनिमित्तकविघ्ने तु मासिकश्राद्धमपि सूतकानन्तरमेव ऋष्यशृङ्गवचनबलादनुष्ठेयम् । देवलाभिप्रायेणैवमेव विषयव्यवस्था कृता । एतत् ऋष्यशृङ्गवचनं सूतकाशौचविषयम् । निमित्तान्तरतत्परिहारे,

"एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते"—

इत्यादि स्मृत्यन्तरवचनमिति । यत्तु व्यासेनोक्तम्,—

"आशौचे तु समुत्पन्ने अन्तरा मृतसूतके ।
अमावास्यां प्रकुर्वीत शुद्धावेके मनीषिणः"—इति ॥

अन्तरा प्रयोगमध्ये पाकोपक्रमात् प्राक् मृतके सूतके वा जाते अमावास्याममावास्यायां शुद्धौ शुद्ध्यनन्तरं वा श्राद्धं प्रकुर्वीतेति। एतच्च मासिकसांवत्सरिकश्राद्धविषयम्। अतएवोक्तं षट्त्रिंशन्मतेन,—

"मासिकेऽब्दे तु संप्राप्ते अन्तरा मृतसूतके ।
वदन्ति शुद्धौ तत्कार्यं दर्शे वाऽपि विचक्षणाः"—इति ॥

दर्शग्रहणं शुक्लकृष्णैकादश्योरुपलक्षणार्थम्। अतएव मरीचिः,—

"आशौचे तु समुत्पन्ने अविज्ञाते मृतेऽहनि ।
एकादश्यान्तु कर्त्तव्यं कृष्णपक्षे विशेषतः"—इति ॥

कृष्णपक्षे या एकादशी तस्यां विशेषतः कर्त्तव्यमिति योजना। पितृकार्ये कृष्णपक्षस्यैव विशेषतो ग्राह्यत्वात्। कृष्णैकादशीतोऽपि अमावास्याया मुख्यत्वं पितृकार्ये दण्डापूपन्यायसिद्धम्। एतदुक्तं भवति। आशौचसमनन्तरकालो मुख्यकालसन्निकृष्टत्वाच्छ्रेष्ठतमः। दर्शकालस्तु मुख्यकालप्रत्यासत्त्यभावात् ततो जघन्यइति। अतएव ऋष्यशृङ्गः,—

"शुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते ।
सा तिथिस्तस्य कर्त्तव्या न चान्या वै कदाचन"—इति ॥

शुचिना तावच्छ्राद्धं कर्त्तव्यं, तथाशौचवशान्मुख्यकाले शुद्ध्यभावे शुद्ध्यनन्तरं या तिथिः प्रतिपद्यते लभ्यते, सा तिथिस्तस्य कर्मणो-ऽमुख्येन स्वीकर्त्तव्या। आशौचाद्यनुत्पाते तु मुख्यकालो नालस्यादि-नाऽतिक्रमणीयः। तदाह सएव,—

"नित्यच्छेदो न कर्त्तव्यो विनाऽग्नौकं यदृच्छया।
पिण्डं श्राद्धस्य दातव्यं विच्छित्तिं नैव कारयेत्"—इति॥

चकारेणाग्नौकरणं समुच्चिनोति। श्राद्धशब्देनात्र ब्राह्मणतर्पण-मात्रं विवक्षितं, पिण्डदानस्य पृथगुपात्तत्वात्। विच्छित्तिं नैव कारये-दिति ब्राह्मणं कर्त्तुमसमर्थश्चेत्पिण्डप्रदानमात्रमपि कुर्यात्, सर्वथा पितृयज्ञस्य विच्छेदं न कुर्यादित्यर्थः। अतएव निगमः। "आहिताग्नेः पितृयज्ञं पिण्डैरेव ब्राह्मणानपि वा भोजयेत्"—इति। अत्र व्यवस्थितो विकल्पः। सति सामर्थ्ये ब्राह्मणतर्पणं पिण्डप्रदानञ्च कुर्यात्, तदा-सामर्थ्ये पिण्डप्रदानमात्रमिति। यत्तु हारीतेन श्राद्धविघ्ने समुत्पन्ने अमावास्यादिष्वामश्राद्धं विहितम्,—

"श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्त्तितम्।
अमावास्यादिनियतं माससांवत्सरादृते"—इति॥

मासं मासिकं, सांवत्सरं सांवत्सरिकम्। तद्भार्यारजोदर्शनजनित-विघ्नविषयम्। तथाऽऽहोशनाः,—

"अपत्नीकः प्रवासी च यस्य भार्या रजस्वला।
सिद्धान्नं न प्रकुर्वीत आमन्तस्य विधीयते"—इति॥

कात्यायनोऽपि,—

"आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि।
आमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वला"—इति॥

व्याघ्रपादोऽपि,—

"असंभवे देशकालानां विभवे समुपस्थिते।
आमश्राद्धं द्विजैः कार्यं शूद्रः कुर्यात्सदैव हि"—इति॥

न च कात्यायनव्याघ्रपादवचनपर्यालोचनया मासिकप्रत्याब्दिकयोरप्यामश्राद्धं प्राप्नोतीति मन्तव्यम्। मासवत्सराहृते,—इति विशेषवचनेनामश्राद्धस्य तद्व्यतिरिक्तविषयत्वावगमात्। अतएव मरीचिः,—

"अनग्निकः प्रवासी च यस्य भार्या रजस्वला।
आमश्राद्धं द्विजः कुर्यान्न तत्कुर्यान्मृतेऽहनि"—इति॥

तदामश्राद्धं मृतेऽहनि न कुर्यात्, किन्तु पक्वान्नेनैव कुर्यादित्यर्थः। लौगाक्षिरपि,—

"पुत्रवत्स्वपि दारेषु विदेशस्थोऽप्यनग्निकः।
अन्नेनैवाब्दिकं कुर्यात् हेम्ना वाऽऽमेन वा कचित्"—इति॥

यत्तु स्मृत्यन्तरे भार्यायां रजस्वलायां मृतेऽहनि श्राद्धनिषेधः,—

"मृतेऽहनि तु संप्राप्ते यस्य भार्या रजस्वला।
श्राद्धं तदा न कर्त्तव्यं कर्त्तव्यं पञ्चमेऽहनि"—इति॥

तस्यायं विषयः। अपुत्रायाः पत्न्याएव पत्युर्मृताहश्राद्धेऽधिकाराद्यदा सैव रजस्वला स्यात्तदा मृतेऽहनि श्राद्धं न कर्त्तव्यं, किन्तु पञ्चमेऽहनीति। तथाच लोकगौतमः,—

"अपुत्रा तु यदा भार्या संप्राप्ते भर्त्तुराब्दिके।
रजस्वला भवेत्सा तु कुर्यात् तत्पञ्चमेऽहनि"—इति॥

प्रभासखण्डेऽपि,—

"शुद्धा सा तु चतुर्थेऽह्नि स्नानाचारी रजस्वला।
दैवे कर्म्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति"—इति॥

अन्ये तु,—

"आहूतोऽप्यथ संप्राप्ते यस्य भार्या रजस्वला।

श्राद्धं तत्र न कर्त्तव्यं कर्त्तव्यं पञ्चमेऽहनि"—इति

लोकगीतमवचनमन्यथा पठित्वा, श्राद्धादौ कर्त्तरि भार्याया सर्वाधिकारसम्पादकत्वात्तस्यां रजोदर्शनदूषितायामधिकारनिवृत्तेस्तत्कालमतिक्रम्य पञ्चमेऽहनि श्राद्धं कर्त्तव्यमिति मन्यन्ते।

नन्वस्मिन्पक्षेऽमावास्यादिश्राद्धस्यापि पञ्चमेऽह्न्युत्कर्षः प्राप्नोति? नैवं, श्राद्धविघ्ने द्विजातीनामिति हारीतवचनेनामावास्यादिश्राद्धस्याम-श्राद्धकार्ये सोमकार्ये पूतीकवद्विहितत्वात्। आहूतोऽप्यथेत्यस्य वचनस्य मृताहव्यतिरिक्तविषयत्वेन सार्थकत्वमस्तीति चेत्। भवेदेतदेवं, यदि विषयान्तरं वक्तुं शक्येत। न त्वेतदस्ति, मृताहविषयत्वन्तु मृतेऽहनि तु संप्राप्ते इति स्मृत्यन्तरवचनादेवावगम्यते। तस्मादेकभार्यस्य मृताहश्राद्धं रजोदर्शनरूपविघ्नोपरमकाल एव कर्त्तव्यं, भार्यान्तरयुक्तेन त्वधिकारानपगमान्मुख्य एव काले कर्त्तव्यमिति। यदत्र युक्तं तद्ग्राह्यम्।

श्राद्धे भोजनीयब्राह्मणपरीक्षा कर्त्तव्या। तत्र श्राद्धं प्रकृत्य यमः,—

"पूर्वमेव परीक्षेत ब्राह्मणान् वेदपारगान्।

शरीरप्रभवैर्दोषैर्विशुद्धांश्चरितव्रतान्॥

दूरादेव परीक्षेत ब्राह्मणान्वेदपारगान्।

इष्टान्वा यदि वाऽनिष्टांस्तत्कालेनैव मानयेत्"—इति॥

पूर्वमिति निमन्त्रणात् पूर्वमित्यर्थः। शरीरप्रभवा दोषाः कुष्ठापस्मारादयः। दूरादिति प्रपितामहादारभ्य भोजनीयब्राह्मणपर्यन्तम्। तथा च हारीतः,—

"उक्तलक्षणसम्पन्नैर्विद्याशीलगुणान्वितैः।
पुरुषत्रयविख्यातैः सर्वं श्राद्धं प्रकल्पयेत्"—इति॥

सर्वं पार्वणैकोद्दिष्टात्मकम्। अतएव मनुनाऽपि पितुः श्रोत्रियत्वेन पुत्रस्य श्रैष्ठ्यमुक्तम्,—

"अश्रोत्रियः पिता यस्य पुत्रः स्याद्वेदपारगः।
अश्रोत्रियो वा पुत्रः स्यात् पिता स्याद्वेदपारगः॥
ज्यायांसमनयोर्विद्याद्यस्य स्याच्छ्रोत्रियः पिता"—इति॥

श्राद्धे भोजनीया ब्राह्मणा याज्ञवल्क्येन दर्शिताः,—

"अग्य्राः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद्युवा।
वेदार्थवित् ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः॥
कर्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निर्ब्रह्मचारिणः।
पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसम्पदः"—इति॥

ऋग्वेदादिसर्ववेदेष्वग्य्रा वर्णिताध्ययनक्रमाः। श्रोत्रियाः श्रुताध्ययनसम्पन्नाः। ब्रह्मवित् ब्रह्मज्ञानवान्। युवा मध्यमवयस्कः। युवत्वञ्च सर्वविशेषणम्। वेदार्थविद्धर्मज्ञानवान्। ज्येष्ठसामेति सामविशेषस्तद्व्रतं च। तद्व्रताचरणेन यस्तदधीते, स ज्येष्ठसामा। त्रिमधुः ऋग्वेदैकदेशः तद्व्रतञ्च। तद्व्रताचरणेन तदध्यायी त्रिमधुः। त्रिसुपर्णमृग्यजुषयोरेकदेशस्तद्व्रतञ्च। तदाचरणेन यस्तदधीते स त्रिसुपर्णकः। ब्राह्मणा न क्षत्रियादयः। उक्तलक्षणा एते ब्राह्मणाः श्राद्धस्य सम्पत्सम्पादका इत्यर्थः। बृहस्पतिरपि,—

"यद्येकं भोजयेच्छ्राद्धे छन्दोगं तत्र भोजयेत्।
ऋचो यजूंषि सामानि त्रितयं तत्र विद्यते॥

अटेत पृथिवीं सर्वां सशैलवनकाननाम् ।
यदि लभ्येत पित्रर्थं साम्नामक्षरचिन्तकः ॥
ऋचा तु तृप्यति पिता यजुषा तु पितामहः ।
पितुः पितामहः साम्ना छन्दोगोऽभ्यधिकस्ततः"—इति ॥

शातातपोऽपि,—

"भोजयेदथर्वाणं दैवे पित्र्ये च कर्मणि ।
अनन्तमक्षयञ्चैव फलं तस्येति वै श्रुतिः"—इति ॥

यमोऽपि,—

"वेदविद्याव्रतस्नाताः श्रोत्रिया वेदपारगाः ।
स्वधर्मनिरताः शान्ताः क्रियावन्तस्तपस्विनः ॥
तेभ्यो हव्यञ्च कव्यञ्च प्रयतेभ्यः प्रदीयते"—इति ।

मनुरपि,—

"श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः ।
अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम् ॥
एकैकमपि विद्वांसं दैवे पित्र्ये च भोजयेत् ।
पुष्कलं फलमाप्नोति नामन्त्रज्ञान् बहूनपि"—इति ॥

वशिष्ठोऽपि । "यतीन् गृहस्थान् साधून् वा"— इति । भोजयेदिति शेषः । ब्रह्माण्डपुराणेऽपि,—

"शिखिभ्यो धातुरक्तेभ्यः त्रिदण्डिभ्यश्च दापयेत्"—इति ।

शिखिनो ब्रह्मचारिणः । धातुरक्ताः धातुरक्तवस्त्रधारिणो वानप्रस्थाः । त्रिदण्डिनो वाक्कायमनोदण्डैरुपेताः यतयः । अत्र परः परः श्रेष्ठः । अतएव नारदः,—

"यो वै यतीननादृत्य भोजयेदितरान् द्विजान् ।
विजानन् वसतो ग्रामे कव्यं तद्याति राक्षसान्"—इति ॥

ब्रह्माण्डपुराणेऽपि,—

"अलाभे ज्ञातिभिक्षूणां भोजयेद्ब्रह्मचारिणम् ।
तदलाभेऽप्युदासीनं गृहस्थमपि भोजयेत्"—इति ॥

उदासीनो ह्यसम्बन्धः । अतएवापस्तम्बः । "ब्राह्मणान् भोजयेद्ब्रह्मविदो योनिगोत्रमन्त्रान्तेवास्यसम्बन्धान्"—इति । योनिसम्बन्धा मातुलादयः । गोत्रसम्बन्धाः सपिण्डाः । मन्त्रसम्बन्धा वेदाध्यापकादयः । अन्तेवासिसंबन्धाः शिष्यशास्त्रोपाध्यायाः । एवंविधसम्बन्धरहितान् ब्राह्मणान् गृहस्थादीन् भोजयेदित्यर्थः । श्राद्धे श्रोत्रियादीनां पङ्क्तिपावनत्वेनापि पात्रविशेषतां सएवाह,—

"अपाङ्क्त्योपहता पङ्क्तिः पाव्यते यैर्द्विजोत्तमैः ।
तान्निबोधत कार्त्स्न्येन द्विजाग्र्यान्पङ्क्तिपावनान् ॥
अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च ।
श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः ॥
त्रिणाचिकेतः पञ्चाग्निः त्रिसुपर्णः षडङ्गवित् ।
ब्रह्मदेयात्मसन्तानश्छन्दोगो ज्येष्ठसामगः ॥
वेदार्थवित्प्रवक्ता च ब्रह्मचारी सहस्रदः ।
शतायुश्चैव विज्ञेया ब्राह्मणाः पङ्क्तिपावनाः"—इति ॥

ब्रह्मदेयात्मसन्तानः ब्राह्मविवाहोढापुत्रः । सहस्रदः गवां सुवर्णस्य वा । यमोऽपि,—

"ये सोमपा विरजसो धर्मज्ञाः शान्तबुद्धयः ।

यजुर्वेद त्रिसौपर्णः त्रिमधुर्वाऽथ यो भवेत् ॥
त्रिणाचिकेतो विरजाश्छन्दोगो ज्येष्ठसामगः ।
अथर्वशिरसोऽध्येता सर्वे ते पङ्क्तिपावनाः ॥
विप्रस्त्वग्निहोत्री च न्यायविच्च षडङ्गवित् ।
मन्त्रब्राह्मणविच्चैव यश्च स्याद्धर्मपाठकः ॥
ब्रह्मदेयासुतश्चैव भावशुद्धः सहस्रदः ।
चान्द्रायणव्रतचरः सत्यवादी पुराणवित् ॥
निष्णातः सर्वविद्यासु शान्तो विगतकल्मषः ।
गुरुवेदाग्निपूजासु प्रसक्तो ज्ञानतत्परः ॥
विमुक्तः सर्वदा धीरो ब्रह्मभूतो द्विजोत्तमः ।
अनमित्रो न चामित्रो मैत्र आत्मविदेव च ॥
स्नातको जप्यनिरतः सदा पुष्पबलिप्रियः ।
ऋजुर्मृदुः क्षमी दान्तः शान्तः सत्यव्रतः शुचिः
वेदज्ञः सर्वशास्त्रज्ञः उपवासपरायणः ।
गृहस्थो ब्रह्मचारी च चतुर्वेदविदेव च ॥
वेदविद्याव्रतस्नाताः ब्राह्मणाः पङ्क्तिपावनाः"—इति ।

पैठीनसिरपि । "अथातः पङ्क्तिपावना भवन्ति त्रिणाचिकेतस्त्रि-मधुस्त्रिसुपर्णश्चीर्णव्रतश्छन्दोगो ज्येष्ठसामगो ब्रह्मदेयानुसन्तानः सच्छ-न्दो वेदाध्यायी चतुर्वेदषडङ्गवित् अथर्वशिरसोऽध्यायी पञ्चाग्नि-र्वेदजापी चेति, तेषामेकैकः पुनाति पङ्क्तिं नियुक्तो मूर्धनि सहस्रै-रप्युपहताम्" इति । शङ्खोऽपि,—

"ब्रह्मदेयानुसन्तानो ब्रह्मदेयाप्रदायकः ।

मन्त्रदेयापतिश्चैव ब्राह्मणाः पङ्क्तिपावनाः ॥
यजुषां पारगो यश्च साम्नां यश्चापि पारगः।
अथर्वशिरसोऽध्येता ब्राह्मणाः पङ्क्तिपावनाः ॥
नित्यं योगपरो विद्वान् समलोष्टाश्मकाञ्चनः।
ध्यानशीलो यतिर्विद्वान् ब्राह्मणः पङ्क्तिपावनः"—इति ॥

बौधायनोऽपि। "त्रिमधुस्त्रिणाचिकेतस्त्रिसुपर्णः पञ्चाग्निः षडङ्गवित्त्रिशीर्षकोऽध्येता सामगा इति पङ्क्तिपावनाः"—इति। हारीतोऽपि। "स्थितिरविच्छिन्नवेदवेदिताऽयोनिसम्बन्धिरसमानार्षत्वञ्चेति कुलगुणाः, वेदाङ्गानि धर्मोऽध्यात्मविज्ञानं स्थितिश्चेति षड्विधं श्रुतं, ब्राह्मणता देवपितृभक्तता समता सौम्यताऽपरोपतापिताऽनसूयता मृदुता अपारुष्यं मित्रता प्रियवादित्वं कृतज्ञता शरण्यता प्रशान्तिश्चेति त्रयोदशविधं शीलम्,

क्षमा दमो दया दानमहिंसा गुरुपूजनम्।
शौचं स्नानं जपो होमस्तपः स्वाध्याय एव च ॥

सत्यवचनं सन्तोषो दृढव्रतत्वमनुपहतत्वमिति षोडश गुणाः वृत्तं, तस्मात् कुलीनाः श्रुतशीलवन्तो वृत्तस्थाः सत्यवादिनोऽव्यङ्गाः पाङ्क्तेयाः। द्वादशोभयतः सोमपस्त्रिणाचिकेतस्त्रिसुपर्णस्त्रिमधुस्त्रिशीर्षको ज्येष्ठसामगः पञ्चाग्निः षडङ्गविद्ब्रह्माप्यूर्ध्वरेताः ऋतुकालगामी तत्त्ववित्चेति पङ्क्तिपावना भवन्ति"। स्थितिरविच्छिन्नसम्प्रदायता। अविच्छिन्नवेदवेदितेत्यत्र हविरामादर्थद्वयविशेषवाची वेदिशब्दो हविःसाध्यं यागं लक्षयति। आर्षेयत्वं प्रवरवंशविज्ञातत्वम्। धर्मो धर्मशास्त्रं, विज्ञानं वैशेषिकादिशास्त्रविज्ञानम्। स्थितिर्वेदशास्त्राविस्मरणम्।

उपपन्नं द्रव्याद्यनेकभक्तता। यथानुकल्पो याज्ञवल्क्येन दर्शितः,—

"स्वस्रीयऋत्विग्जामातृयाज्यश्वशुरमातुलाः।

त्रिणाचिकेतदौहित्रशिष्यसम्बन्धिबान्धवाः"—इति॥

अतएव मनुः,—

"अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः।

मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम्॥

दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत्"—इति॥

विट्पतिर्जामाता अतिथिर्वा। तदुक्तं देवस्वामिना। विट्पतिरतिथिरित्यन्ये वदन्तीति। आपस्तम्बोऽपि। "गुणवल्लाभे सोदर्योऽपि भोजयितव्यः एतेनान्तेवासिनो व्याख्याताः"—इति। बोधायनोऽपि। "तदभावे रहस्यविदृत्विजोऽपि सामान्यानीति आहुरथ सखिना तथा-देवंविधं सपिण्डमप्याशयेत्"—इति। विष्णुपुराणेऽपि,—

"पितृव्यगुरुदौहित्रानृत्विक्स्वस्रीयमातुलान्।

पूजयेद्धव्यकव्येन वृद्धानतिथिबान्धवान्"—इति॥

अत्र ऋत्विक्पितृव्यसोदर्यसपिण्डा वैश्वदेवस्थाने नियोक्तव्याः न पित्रादिस्थाने। तथा चात्रिः,—

"पिता पितामहो भ्राता पुत्रो वाऽथ सपिण्डकः।

न परस्परमर्ह्याः(१) स्युर्न श्राद्धे ऋत्विजस्तथा॥

ऋत्विक्पुत्रादयो ह्येते सकुल्या ब्राह्मणा द्विजाः।

वैश्वदेवे नियोक्तव्या यद्येते गुणवत्तराः"—इति॥

शिष्यस्यापि वैश्वदेवस्थानएव निवेशः। सोदर्ये विहितस्यार्थस्य,

(१) मधुपर्कार्हत्वामधेयोऽस्थलोक्तार्हत्वविशेषोऽत्राभिमतः।

'एतेनान्येऽपि विधयो व्याख्याताः'—इत्यापस्तम्बेन विध्यतिदेशात्। ननु मनुना कल्पान्तरमुक्तम्,—

"कामं श्राद्धेऽर्चयेन्मित्रं नाभिरूपमपि त्वरिम्।
द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम्"—इति॥

तत्र साधारणानुकल्पाभिप्रायेण, किं त्वनुकल्पानुकल्पाभिप्रायेण। न श्राद्धे भोजयेन्मित्रमिति मुख्येनैव निषिद्धस्य मित्रस्य काममर्चयेदिति पात्रत्वमेवाभ्यनुज्ञानात्। वसिष्ठोऽप्यनुकल्पानुकल्पमाह,—

"आनृशंस्यं परो धर्मो याचते यत् प्रदीयते।
अयाचतः सीदमानान् सर्वोपायैर्निमन्त्रयेत्"—इति॥

आनृशंस्यमुत्कृष्टो धर्मः, तेनायाचतः अयाचमानान्, अतएव सीदमानान् निर्गुणानपि सगुणानामनुकल्पानामभावे सर्वोपायैर्यदा ते निमन्त्रणमङ्गीकुर्वन्ति, तादृशैरुपायैर्निमन्त्रयेदिति। अयाचमानानामभावे याचमानाय निर्गुणाय प्रदीयते इति। एतदप्यनुकल्पो भवतीत्यर्थः। सत्यपि मुख्यकल्पे नानुकल्पोऽनुष्ठेयः। तथाऽऽह मनुः,—

"प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते।
न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम्"—इति॥

साम्परायिकमुत्तरकालिकं स्वर्गादिकं फलमिति। भविष्यत्पुराणेऽपि,—

"ब्राह्मणातिक्रमो नास्ति मूर्खे वेदविवर्जिते।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते"—इति।

वेदविवर्जिते,—इति निर्गुणमात्रोपलक्षणार्थम्। अतएवोक्तं तत्रैव,—

"व्यतिक्रमेण दोषोऽस्ति निर्गुणान् प्रति कर्हिचित् ।
यत्र लोकद्वये मूर्खो दूरस्थश्च गुणान्वितः ।
गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः"—इति ॥

यत्तु पुराणान्तरेऽभिहितम्,—

"श्राद्धकालमतिक्रम्य ब्राह्मणं पतिताहृते ।
दूरस्थं भोजयेन्मूढो गुणाढ्यं नरकं व्रजेत् ॥
तस्मात् संपूजयेदेनं गुणं तत्र न चिन्तयेत् ।
केवलं चिन्तयेज्जातिं न गुणान्विततां खग ॥
सन्निकृष्टं द्विजं यस्तु गुरुजातिं निरर्थकम् ।
मूर्खं वा पण्डितं वाऽपि वृत्तहीनमथापि वा ।
नातिक्रमेन्नरो विद्वान् दारिद्र्याभिहतं तथा"—इति ॥

तद्दौहित्रभागिनेयादिविषयम् । अतएव मनुः,—

"व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत्"—इति ॥

व्रतस्थं केवलव्रतस्थमध्ययनादिरहितमित्यर्थः । गुणवत्सन्निकृष्टा-तिक्रमे तु प्रत्यवायोऽस्ति । तथाच पुराणम्,—

"सप्त पूर्व्वान् सप्त परान् पुरुषानात्मना सह ।
अतिक्रम्य द्विजवरान् नरके पातयेत् खग ॥
तस्मान्नातिक्रमेद्विप्रो ब्राह्मणान् प्रातिवेश्मिकान् ।
संबन्धिनस्तथा सर्व्वान् दौहित्रं विट्पतिं तथा ॥
भागिनेयं विशेषेण तथा बन्धुं खगाधिप ।
नातिक्रमेन्नरश्चैतानमूर्खानपि गोपते ॥
अतिक्रम्य महारौद्रं रौरवं नरकं व्रजेत्"—इति ॥

अपरिवेदकारार्थः। अमूर्खानेवातिक्रम्य नरकं भवेत्, न मूर्खानित्यभिप्रायः। श्राद्धे वर्जनीया ब्राह्मणा याज्ञवल्क्येन दर्शिताः,—

"रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा।
अवकीर्णी कुण्डगोलौ[१] कुनखी श्यावदन्तकः॥
भृतकाध्यापकः क्लीबः[२] कन्यादूष्यभिशस्तकः।
मित्रध्रुक् पिशुनः सोमविक्रयी परिविन्दकः॥
मातापितृगुरुत्यागी कुण्डाशी वृषलात्मजः।
परपूर्वापतिः स्तेनः कर्मदुष्टश्च निन्दिताः"—इति॥

रोगी उन्मादादिरोगवान्। उन्मादादिरोगाश्च देवलेन दर्शिताः। "उन्मादत्वग्दोषराजयक्ष्मश्वासमधुमेहभगन्दरोऽश्मरीत्यष्टौ पापरोगाः"—इति। हीनं न्यूनमधिकमतिरिक्तमङ्गं यस्यासौ हीनातिरिक्ताङ्गः। एकेनाप्यक्ष्णा यो न पश्यति, असौ काणः। तेन च बधिरमूकमूर्खादयो लक्ष्यन्ते। द्विरूढा पुनर्भूस्तस्यां जातः पौनर्भवः। अवकीर्णी क्षतव्रतः। कुनखी दुष्टनखः। श्यावदन्तः स्वाभाविककृष्णदन्तः। वेतनं गृहीत्वा योऽध्यापयति, स भृतकाध्यापकः। असता सता वा दोषेण कन्यां दूषयिता[३] कन्यादूषी। महापातकाभिशस्तः। परिविन्दकः परिवेत्ता। कुण्डस्यान्नं योऽश्नाति स कुण्डाशी।

---

(१) कुण्डगोलौ,—"परस्त्रियां जातौ द्वौ सुतौ कुण्डगोलकौ। पत्यौ जीवति कुण्डः स्यान्मृते भर्त्तरि गोलकः"—इत्युक्तलक्षणौ।

(२) क्लीबः,—"न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति। मेढ्रं चोन्मादशुक्राभ्यां हीनं क्लीबः स उच्यते"—इत्युक्तलक्षणः।

(३) दूषयिता,—इति तृजन्तं पदम्। अतएव कन्यामिति कर्मणि द्वितीया।

कुण्डवद्गोलकस्याप्युपनायकः। विहितकर्मपरित्यागी ब्रह्मकुलो-द्भवात्मजः। परपूर्वापतिः पुनर्भूपतिः। अदत्तादायी स्तेनः। कर्मदुष्टाः शास्त्रविरुद्धाचारोपेताः। एते श्राद्धे निन्दिता वर्ज्या इत्यर्थः। मनुरपि,—

"ये स्तेनपतितक्लीबा ये च नास्तिकवृत्तयः।
तान् हव्यकव्ययोर्विप्राननर्हान् मनुरब्रवीत्॥
जटिलं चानधीयानं दुर्बालं कितवं तथा।
याजयन्ति च ये पूगांस्तांश्च श्राद्धे न भोजयेत्॥
चिकित्सकान् देवलकान् मांसविक्रयिणस्तथा।
यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः॥
ब्रह्मद्विट् परिवित्तिश्च गणाभ्यन्तर एव च।
कुशीलवोऽवकीर्णी च वृषलीपतिरेव च॥
पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे।
भृतकाध्यापको यश्च भृतकाध्यापितस्तथा॥
शूद्रशिष्यो गुरुश्चैव वाग्दुष्टः कुण्डगोलकौ।
अकारणपरित्यक्ता मातापित्रोर्गुरोस्तथा॥
ब्राह्मैर्यौनैश्च संबन्धैः संयोगं पतितैर्गतः।
अगारदाही गरदः कुण्डाशी सोमविक्रयी॥
समुद्रयायी बन्दी च तैलिकः कूटकारकः।
पित्रा विवदमानश्च केकरो मद्यपस्तथा॥

केकरः तिर्यग्दृष्टिः।

पापरोग्यभिशस्तश्च दाम्भिको रसविक्रयी।

भ्रातुःप्रदायां कन्यां च यश्चाग्रेदिधिषूपतिः ॥
मित्रध्रुक् शठवृत्तिश्च पुत्राचार्यस्तथैव च ।
भ्रामरी गण्डमाली च श्वित्र्यथो पिशुनस्तथा ॥
उन्मत्तोऽन्धश्च वर्ज्याः स्युर्वेदनिन्दक एव च ।
हस्तिगोऽश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति ।
पक्षिणां पोषको यश्च युद्धाचार्यस्तथैव च ।
स्रोतसां भेदकश्चैव तेषां चावरणे रतः ॥
गृहसंवेशको दूतो वृक्षारोपक एव च ।
श्वक्रीडी श्येनजीवी च कन्यादूषक एव च ॥
हिंस्रो वृषलपुत्रश्च गणानां चैव याजकः ।
आचारहीनः क्लीबश्च नित्यं याचनकस्तथा ॥
कृषिजीवी शिल्पिजीवी सद्भिर्निन्दित एव च ।
औरभ्रिको माहिषिकः परपूर्वापतिस्तथा ॥
प्रेतनिर्यातकश्चैव वर्जनीयाः प्रयत्नतः ।
एतान्विगर्हिताचारानपाङ्क्तेयान्द्विजाधमान् ॥
द्विजातिप्रवरो विद्वानुभयत्रापि वर्जयेत्"—इति ।

स्तेनोऽत्र ब्रह्मस्वव्यतिरिक्तद्रव्यापहारी विवक्षितः। ब्रह्मस्वापहारिणः पतितमध्येवोपात्तत्वात्[1]। पारलौकिकफलकं कर्म नास्तीति मन्यमाना नास्तिकास्तेभ्यो वृत्तिर्जीविका येषां ते नास्तिकवृत्तयः। जटिलो ब्रह्मचारी। अनधीयानः,—इति जटिलविशेषणम्। अतश्चानधीयानो ब्रह्मचारी प्रतिषिध्यते। न तु ब्रह्मचारिमात्रं, तथा चाह, 'पञ्चाग्नि-

(१) पातित्यहेतुमहापातकमध्ये ब्रह्मस्वापहारस्य परिगणनादिति भावः।

ब्रह्मचारिणः'—इति पाचनविधानात्। न चाध्ययनरहितस्य ब्रह्मचारिणोऽश्रोत्रियत्वेन श्राद्धे प्रसक्त्यभावात् प्रतिषेधोऽनुपपन्नइति मन्तव्यम्। यतः,

"व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत्"—

इत्यत्र दौहित्रपदग्रहणमविवक्षितमिति ज्ञात्वा अध्ययनरहितोऽपि ब्रह्मचारी श्राद्धे भोजनीयतया प्रसक्तः प्रतिषिध्यतइति। दुर्वालः खल्वाटः कपिलकेशो वा। तदुक्तं संग्रहकारेण,—

"खल्वाटकस्तु दुर्वालः कपिलस्त्वेवच"—इति ॥

कितवो द्यूतासक्तः। पुरयाजकाः गणयाजकाः। अत्र, श्राद्धे इति विशेषोपादानाद्दुर्वालादीनां श्राद्धएव वर्ज्यत्वं, न दैवे इत्यवगम्यते। अन्यथा, प्रकरणादेवोभयत्र निषेधावगमाद्विशेषोपादानमनर्थकं स्यात्। अतएव गौतमः। "हविःषु च दुर्वालादीन् श्राद्धएवैके"—इति। हविःषु च दैवेऽपि एवं पित्र्यवत्परीक्ष्य दुर्वालादीन्वर्जयेत्। एके मन्वादयः श्राद्धएव न भोजयेत्, दैवे तु भोजयेदित्याहुरित्यभिप्रायः। चिकित्सकाः जीवनार्थमदृष्टार्थञ्च भेषजकारिणः। "तस्माद्ब्राह्मणेन भेषजं न कार्यं अपूतो ह्येषोऽमेध्यो यो भिषक्"—इति अविशेषेणैव निन्दार्थवाददर्शनात्। धनार्थं संवत्सरत्रयं देवार्चको देवलः। तदुक्तं देवलेन,—

"देवार्चनपरो नित्यं वित्तार्थी वत्सरत्रयम्।
असौ देवलको नाम हव्यकव्येषु गर्हितः॥
अपाङ्क्तेयः स विज्ञेयः सर्वकर्मसु सर्वदा"—इति।

आपद्यपि मांसविक्रयिणः। अन्यदपि विपणजीवित्वेनैव निषेधे

निरूढे मांसविक्रयित्वमिति पुनर्विशेषोपादानस्य वैयर्थ्यात्। अनापदि वाणिज्येन जीवन्तो विपणजीविनः, न त्वापद्यपि। तत्र,

"वाणेन कर्त्तव्या जीवेद्विप्रो वाऽप्यापदि द्विजः"—

इति वाणिज्यस्यापत्कल्पतया विहितत्वात्। विहितत्यागकारणं विना श्रौतस्मार्त्ताग्निपरित्यक्ता परित्यक्ताग्निः। अल्पकस्य धनं वृद्ध्यर्थाधिकग्रहणा धनप्रयोजको वार्धुषिकः। तथाच स्मृतिः,—

"समर्घं धनमुद्धृत्य महार्घं यः प्रयच्छति।
स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः"—इति॥

यक्ष्मी क्षयरोगी। अनापदि पशुपालः। अविवाहिते ज्येष्ठे अनाहिताग्नौ वा सति यः कनीयान् कृतदारपरिग्रह आहिताग्निर्वा भवेत्, स परिवेत्ता तज्ज्येष्ठस्तु परिवित्तिः। तथाच मनुः,—

"दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः"—इति॥

अग्रजः सोदर्यो विवक्षितः। तथाच गर्गः,—

"सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रहम्।
आवसथ्यं तथाऽऽधानं पतितस्त्वन्यथा भवेत्"—इति॥

आवसथ्यमावसथ्याधानं, आधानं गार्हपत्याद्याधानम्[१]। असोदर्ये तु न दोषः। तथाच शातातपः,—

"पितृव्यपुत्रान् सापत्नान् परनारीसुतांस्तथा।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने"—इति॥

---

(१) आवसथ्योऽग्निर्गार्ह्यः स्मार्त्ताग्निरिति यावत्। गार्हपत्यादयस्तु श्रौताग्नयः। आदिपदात् दक्षिणाग्न्याहवनीयाग्न्योर्ग्रहणम्।

परनारीसुताः क्षेत्रजा भ्रातरः। यमोऽपि,—

"पितृव्यपुत्रान् सापत्न्यान् परपुत्रांस्तथैव च।

दाराग्निहोत्रकर्म्मेषु नाधर्म्मः परिवेदने"—इति॥

परपुत्रा दत्तकीतादयः भ्रातरः। सोदर्य्यविषयेऽपि क्वचिद्दोषो-नास्ति। तथाच शातातपः,—

"क्लीबे देशान्तरस्थे च पतिते भिक्षुकेऽपि वा।

योगशास्त्राभियुक्ते च न दोषः परिवेदने"—इति॥

योगशास्त्राभियुक्तो विरक्तः। कात्यायनोऽपि,—

"देशान्तरस्थक्लीबैकवृषणानसहोदरान्।

वेश्यातिसक्तपतितशूद्रतुल्यातिरोगिणः[1]॥

जडमूकान्धबधिरकुब्जवामनखोड्कान्।

अतिवृद्धानभार्य्यांश्च कृषिसक्तान् नृपस्य च[2]॥

धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा।

कुष्ठोन्मत्तचौरांश्च[3] परिविन्दन् न दुष्यति"—इति॥

खोड़ो भग्नपादद्वयः। अभार्य्या नैष्ठिकब्रह्मचारिणः। कामतो-ऽकारिणः स्वेच्छयैव विवाहानभिलषाः। देशान्तरगतादिषु कालप्रती-

---

(१) रजकचर्मकारकाद्याः पञ्चविधेन इति रत्नाकरः। शूद्रतुल्याश्च, "गोरक्षकान् वाणिजिकान् तथा कारुकुशीलवान्। प्रेष्यान् वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्"—इति मनूक्तलक्षणाः।

(२) नृपस्य चेति चकारेण राजाभियुक्तश्चोच्यते।

(३) कुलटोन्मत्तचौरांश्च,—इत्यपि पाठः। तत्पाठे तु, परकुलं परगोत्रमटति गच्छति प्राप्नोति वा दत्तकः स कुलट इत्यर्थो बोध्यः।

देशान्तरस्थे परिवेदने दोषोऽस्ति। तथाच वसिष्ठः। "अष्टौ दश द्वादश वर्षाणि ज्येष्ठं भ्रातरमनिर्विष्टमप्रतीक्षमाणः प्रायश्चित्ती भवति"—इति। अनिर्विष्टमकृतविवाहम्। अस्येयं व्यवस्था। अदृष्टार्थमर्थार्थं वा द्वादशवर्षप्रतीक्षणं देशान्तरगतज्येष्ठविषयम्[१], अष्टौ दशेति पक्षद्वयं कार्यान्तरार्थं देशान्तरगतविषयम्। तथा स्मृतिः,—

"द्वादशैव तु वर्षाणि ज्यायान् धर्मार्थयोगतः।
न्याय्यः प्रतीक्षितुं भ्राता श्रूयमाणः पुनः पुनः"—इति॥

क्लीबादयस्तु न प्रतीक्षणीयाः। तथाच स्मृतिः,—

"उन्मत्तः किल्विषी कुष्ठी पतितः क्लीबएव वा।
राजयक्ष्मामयावी च न न्याय्यः स्यात्प्रतीक्षितुम्"—इति॥

विरक्तवैश्यातिसक्तादिषु तु चिरकालानुवृत्त्या विवाहस्वाधानादिकृतावधिवेदनं न दोषाय, तत्र कालावधेरश्रुतत्वात्। आधानविषयेऽपि ज्येष्ठानुमत्याऽधिवेदने न दोषः। तथाच बृहद्वसिष्ठः,—

"अग्रजस्य यदाऽनग्निरादध्यादनुजः कथम्।
अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि"—इति॥

आधानाधिकारिणि ज्येष्ठेऽनाहिताग्नावपि कनिष्ठस्तदनुमत्याऽऽधानं कुर्यादित्यभिप्रायः। अयं न्यायः पित्रादिषु द्रष्टव्यः। तथाचोशनाः,—

"पिता पितामहो यस्य अग्रजो वाऽथ कस्यचित्।
तपोऽग्निहोत्रमन्त्रेषु न दोषः परिवेदने"—इति॥

यस्य कस्यचित् पिता पितामहो वाऽग्रजो वाऽऽहिताग्निर्न भवति,

---

(१) अदृष्टार्थमर्थार्थं वा देशान्तरगतेऽग्रजः।

तस्य तदनुमत्याऽऽधानकरणेऽपि न दोष इत्यर्थः। एवमेव कन्यापरि-वेदनेऽपि दोषतदपवादौ द्रष्टव्यौ। अधीतविस्मृतवेदो निराकृतिः। तथाच देवलः,—

"अधीत्य विस्मृते वेदे भवेद्विप्रो निराकृतिः"—इति।

नानाजातीया अनियमवसतयो गणास्तेषां मध्यवर्त्ती गणाभ्यन्तरः। कुशीलवो गायकादिः। वृषलीपतिस्तु रजस्वलायाः कन्यायाः पतिः। तदुक्तं देवलेन,—

"वन्ध्या तु वृषली ज्ञेया वृषली च मृतप्रजा।
अपरा वृषली ज्ञेया कुमारी या रजस्वला॥
यस्त्वेनामुद्वहेत् कन्यां ब्राह्मणो ज्ञानदुर्बलः।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम्"—इति॥

यस्य गृहे उपपतिर्जारः सदा संवसेत्, सोऽपि वर्ज्यः। तदुक्तं देवलेन,—

"परदाराभिगो मोहात् पुरुषो जार उच्यते।
स एवोपपतिर्ज्ञेयो यः सदा संवसेद्गृहे"—इति॥

वाग्दुष्टो निष्ठुरवाक्। पतितैर्महापातकिसंसर्गिभिः सह मार्गयानेन समन्वैर्विद्यायोनिसम्बन्धैः संयोगं गतः, सोऽत्र विवक्षितः। न तु साक्षात् संसर्गी, तस्य पतितमध्ये एवोपात्तत्वात्। वेकरोऽर्थवृत्तिः। अग्रेदिधिष्वाः पतिरग्रेदिधिषूपतिः। ज्येष्ठायामनूढायामूढा कनिष्ठा या, साऽग्रेदिधिषूः। तदुक्तं देवलेन,—

"ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा।
सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूर्मता"—इति॥

पुराणार्थोऽक्षरपाठकः। भ्रामरी वृत्त्यर्थमेव भ्रमरवद्धनार्जकः। अश्वपण्यको वर्धकिवृत्त्या वर्त्तमानः। उरभ्रा पशवः। तएव वृत्त्यर्थं पालनीया यस्यासावौरभ्रकः। महिषः पाल्यो यस्यासौ माहिषकः। अथवा, व्यभिचारिणीपुत्रः। तदाह देवलः,—

"महिषीत्युच्यते भार्य्या या चैव व्यभिचारिणी।
तस्यां यो जायते गर्भः स वै माहिषकः स्मृतः"—इति॥

एतान् पूर्व्वोक्तानुभयत्र दैवे पित्र्ये च वर्जयेदित्यर्थः। यमोऽपि,—

"काणाः कुण्डाश्च षण्डाश्च कृतघ्ना गुरुतल्पगाः।
ब्रह्मघ्नाश्च सुरापाश्च स्तेना गोघ्नाश्चिकित्सकाः॥
राजकामास्तथोन्मत्ताः पशुविक्रयिणश्च ये।
मानकूटास्तुलाकूटाः शिल्पिनो ग्रामयाजकाः॥
राजभृत्यान्धबधिरा मूर्खखल्वाटपङ्गवः।
वृषलीफेनपीताश्च(१) क्षेत्रियाजकयाजकाः॥
कालोपजीविनश्चैव ब्रह्मविक्रयिणस्तथा।
दण्डपूजाश्च* ये विप्राः पापकृत्यपराश्च ये॥
आगारदाहिनश्चैव गरदा वनदाहकाः।
कुण्डाशिनो देवलकाः परदाराभिमर्शकाः॥
ग्रामदग्धाः कुनखिनः शिल्पिनः कुष्ठिनश्च ये।
वणिजो मधुकर्त्तारो हस्त्यश्वदमका द्विजाः॥

---

* दण्डभूजाश्च,—इति मु०।

---

(१) वृषलीफेनपीताः शूद्रापतयः।

कन्यानां दूषकाश्चैव ब्राह्मणानाञ्च दूषकाः ।
सूचकाः प्रेषकाश्चैव कितवाश्च कुशीलवाः ॥
असमानाञ्च भेत्तारः प्रयागे ये च* याचकाः ।
अध्यापका भाविषकाः सर्वविक्रयिणश्च ये ॥
षण्डःकर्णी धूतर्ष्मिर्निषभुक् मद्यविक्रयी ।
पाण्डुरोगी गण्डमाली यक्ष्मी च भ्रामरी तथा ॥
पिशुनः कूटसाक्षी† च दीर्घरोगी तथाऽश्रमी ।
प्रव्रज्योपनिवृत्तश्च तथा प्रव्रजितश्च यः ॥
यश्च प्रव्रजिताज्जातः प्रव्रज्याऽवसितश्च यः ।
तावुभौ ब्रह्मचण्डालावाह वैवस्वतो यमः ॥
राज्ञः प्रेष्यकरोयश्च ग्रामस्य नगरस्य वा ।
समुद्रयायी वान्ताशी केशविक्रयिणश्च ये ॥
अवकीर्णी च वीरघ्नः(१) गुरुघ्नः पितृदूषकः ।
गोविक्रयी च दुर्वालः पूगानां चैव याजकः ॥
अपपश्च कदर्यश्च(२) सह पित्रा विवादकृत् ।

---

* यत्र,—इति सो॰ पा॰ ।

† कूटयाजी,—इति सो॰ पा॰ ।

---

(१) वीरघ्नः अग्निपरित्यागी । "वीरहा वा एष देवानां योऽग्निमुद्वासयते"—इति श्रुतेः ।

(२) "कदर्यः, "आत्मानं धर्मकृत्यञ्च पुत्रदारांश्च पीडयन् । योलोभात् सञ्चिनोत्यर्थान् स कदर्य इति स्मृतः"—इत्युक्तलक्षणः ।

दाम्भिको वृषलीभर्त्ता त्यक्तात्मा दारदूषकः ॥
अग्निश्च निन्दिताचारः स्वधर्म्मपरिवर्ज्जकः ।
परिवित्तिः परिवेत्ता भृताचार्यो* निराकृतिः(१) ॥
शूद्राचार्यः सुताचार्यः शूद्रशिष्यस्तु नास्तिकः ।
रथकारदारकाचार्यौ मानकस्तैलिकस्तथा ॥
चोरा वार्धुषिका दुष्टाः परस्वानाञ्च दूषकाः ।
चतुराश्रमवाह्याश्च सर्वे ते पङ्क्तिदूषकाः ॥
इत्येतैर्लक्षणैर्युक्तांस्तान्विप्रान्न नियोजयेत्"—इति ।

विद्यादिगुणयोगेऽप्येतेषां वर्ज्जनीयत्वं ब्रह्माण्डपुराणेऽभिहितम्,—

"श्राद्धार्हगुणयोगेऽपि नैते श्राद्धे कथञ्चन ।
निमन्त्रणीयाः श्राद्धेषु सम्यक् फलमभीप्सता"—इति ॥

एवं ब्राह्मणान्प्रागेव सम्यक् परीक्ष्य पूर्व्वेद्युर्निमन्त्रयीत । तथाच हारीतः।"यत्नेनैवमभिधाय श्राद्धमाचरिष्यन् पूर्व्वेद्युर्निमन्त्रयेत्"—इति। असम्भवे परेद्युर्निमन्त्रयीत । तथाच कूर्म्मे,—

"श्वो भविष्यति मे श्राद्धं पूर्वेद्युरभिपूजयेत् ।
असम्भवे परेद्युर्वा यथोक्तैर्लक्षणैर्युतान्"—इति ॥

देवलोऽपि,—

"यः कर्त्ताऽस्मीति निश्चित्य दाता विप्रान्निमन्त्रयेत् ।

---

* भृतकाचार्यौ,—इति मु० ।

(१) निराकृतिः,—"यज्ञाधानाभिमानस्वाध्यायादीन्निराकृतवान् । निराकर्त्ताऽमरादीनां स विज्ञेयो निराकृतिः"—इत्युक्तलक्षणः । अधीत-विस्मृतवेदो वा (६९२ पृ०)।

निरामिषं सकृद्भुक्ता सर्वंप्रस्रवणे गृहे ॥

अवस्रवे परेद्युर्वा ब्राह्मणांस्तान्निमन्त्रयेत्"—इति ।

अत्र विशेषो मनुना दर्शितः,—

"पूर्व्वेद्युरपरेद्युर्वा श्राद्धकर्मण्युपस्थिते ।

निमन्त्रयीत त्र्यवरान् सम्यग्विप्रान् यथोदितान्"—इति ॥

वराहपुराणे,—

"अन्नमौषधि कर्त्तव्यं श्वः कर्त्ताऽस्मीति जानता ।

स्थानोपलेपनं भूमिं कृत्वा विप्रान्निमन्त्रयेत् ॥

दन्तकाष्ठञ्च विसृजेत् ब्रह्मचारी शुचिर्भवेत्"—इति ॥

श्राद्धभूमिं परिष्कृत्य गोमयादिना तत्स्थानोपलेपनं कृत्वा विप्रान् रात्रौ निमन्त्रयेदित्यर्थः[1] । तथाच ब्रह्माण्डपुराणम्,—

"पूर्व्वेऽह्नि रात्रौ विप्राग्र्यान् कृतापसव्यगात्रकान् ।

गत्वा निमन्त्रयेद्देवपित्रुद्देशसमन्वितः"—इति ॥

निमन्त्रणप्रकारः प्रचेतसा दर्शितः,—

"कृतापसव्यः पूर्व्वेद्युः पितृन् पूर्व्वं निमन्त्रयेत् ।

भवद्भिः पितृकार्य्यं नः सम्पाद्यञ्च प्रसीदत ॥

सव्येन वैश्वदेवार्थं प्रणिपत्य निमन्त्रयेत्[2]"—इति ।

अत्र प्रणतिपूर्व्वकं निमन्त्रणं शूद्रविषयम् । तथाच पुराणम्,—

"दक्षिणं चरणं विप्रः सव्यं वै क्षत्रियस्तथा ।

---

(१) तथाच, भूमिं,—दन्तकाष्ठं परित्यज्य दन्तधावनरहित भावः ।

(२) कृतापसव्यः प्राचीनावीती । पितृन् उद्दिश्येति शेषः । सव्येन उपवीतिना ।

"पादावादाय वैश्योऽपि शूद्रः प्रणतिपूर्वकम्"—इति।

इति विहितस्पर्शो जानुप्रदेशे कर्त्तव्यः। तथाच मनुः,—

"दक्षिणं जानुमालभ्य त्वं मयाऽत्र निमन्त्रितः"—इति।

पूर्व्वं निमन्त्रयेदित्यत्र(१) पूर्वपदस्य वैश्वदेवार्थं निमन्त्रयेदिति व्यवहितेनान्वयः। अतएव बृहस्पतिः,—

"उपवीती ततो भूत्वा देवताऽर्थं द्विजोत्तमान्।
अपसव्येन पित्र्ये च स्वयं शिष्योऽथवा सुतः(२)"—इति॥

पार्व्वणश्राद्धे ब्राह्मणसङ्ख्यामाह पैठीनसिः। "ब्राह्मणान् सप्त पञ्च द्वौ वा श्रोत्रियानामन्त्रयेत्"—इति॥

यदा पञ्च ब्राह्मणाः, तदा दैवे द्वौ पित्र्ये त्रय इति विभागः। "द्वौ दैवे पितृकार्ये त्रीन्"—इति मनुस्मरणात्। तस्मादयुग्मसङ्ख्यया समविभागार्थं पित्र्ये त्रय इति युक्तम्। यत्तु शौनकेन पित्र्येऽपि युग्मविधानं कृतं, "एकैकस्य द्वौ द्वौ"—इति, तद्वृद्धिश्राद्धविषयम्। पित्रादिस्थानेषु सति सामर्थ्ये एकैकस्य त्रींस्त्रीन्विप्रान् भोजयेत्। तथाच शौनकः। "एकैकमेकैकस्य त्रींस्त्रीन्वा"—इति। अत्यन्तविभवे त्वेकैकस्य पञ्च सप्त वा ब्राह्मणान् भोजयेत्। तथाच गौतमः। "नवावरान् भोजयेदयुजो वा यथोत्साहम्"—इति॥

अस्यार्थः। यथोत्साहं यथाविभवं पित्रादिस्थानेषु प्रत्येकमयुजः पञ्च सप्त वा ब्राह्मणान् भोजयेदिति। वचनस्य कथं पञ्चसु सप्तसु वा ब्राह्मणेषु पर्य्यवसानम्?

---

(१) पितॄन् पूर्व्वं निमन्त्रयेदिति प्रचेतोवचने इत्यर्थः।

(२) निमन्त्रयेदिति शेषः।

"सामर्थ्येऽपि नवभ्योऽर्वाग्भोजयीत यति द्विजान् ।
नोर्ध्वं कर्तव्यमित्याहुः केचित्तद्दोषदर्शिनः[(१)]"—

इति ब्रह्माण्डपुराणवचनादिति ब्रूमः। शौनकगौतमाभ्यामुक्तोऽयं श्राद्धविस्तरो मनुना नादृतः,—

"द्वौ दैवे पितृकार्ये त्रीन् एकैकमुभयत्र वा ।
भोजयेत्सुसमृद्धोऽपि न प्रसज्जेत विस्तरे ॥
सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदम् ।
पञ्चैतान्विस्तरो हन्ति तस्मान्नेहेत विस्तरम्" ॥

इत्यकारणकमेव विस्तरप्रतिषेधात्। अतएव शङ्खलिखितरपि,—

"एकैकमथवा द्वौ त्रीन् दैवे पित्र्ये च भोजयेत् ।
सत्क्रियाकालपात्रादि न सम्पद्येत विस्तरे"—इति ॥

वशिष्ठोऽपि,—

"द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा ।
भोजयेत्सुसमृद्धोऽपि विस्तरन्तु विवर्जयेत्"—इति ॥

अतएव याज्ञवल्क्येनापि सङ्कोचएव पक्षो विहितः,—

"द्वौ दैवे प्राक्त्रयः पित्र्य उदगेकैकमेव वा ।
मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम्"—इति ॥

एकैकमुभयत्र वेति श्राद्धपाकासम्भवे वेदितव्यम्। यत्तु मनुनोक्तम्,—

"भोजयेदथवाऽप्येकं ब्राह्मणं पङ्क्तिपावनम्"—इति ।

तदप्यन्नाभावविषयम्। यदा त्वेकएव भोक्ता तदैवमाह वशिष्ठः,—

---

(१) तद्दोषदर्शिनः ब्राह्मणबाहुल्यदोषदर्शिनः। स च दोषोऽनुपदमेव वक्ष्यते।

"यद्येवं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् ।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु ॥
देवतायतने कृत्वा यथाविधि प्रवर्त्तयेत् ।
प्रास्येदग्नौ तदन्नं तु दद्याद्वा ब्रह्मचारिणे"—इति ॥

निमन्त्रणे नियमान्तरमाह मनुः,—

"पठन्निमन्त्र्य नियमान् श्रावयेत् पैतृकान् बुधः ।
अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः ॥
भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा"—इति ।

निमन्त्रितैर्यत्कर्त्तव्यं तदाहात्रिः,—

"ते तत्राप्यविघ्नेन गतेयं रजनी यदि ।
यथाश्रुतं प्रतीक्षेरन् श्राद्धकालमतन्द्रिताः"—इति ॥

ते निमन्त्रिता विप्राः श्राद्धकर्मारम्भविघ्नपूर्वकं तथाऽस्त्वित्युक्त्वा यथाश्रुतं विहितं नियमजातं, श्राद्धकालं श्राद्धे भुक्तं यावत् जीर्यति तावदनुतिष्ठेरन्नित्यर्थः । तथाच प्रचेताः,—

"आऽन्नपरिणामात्तु ब्रह्मचर्यं द्वयोः स्मृतम्"—इति ।

यमोऽपि,—

"आमन्त्रितास्तु ये विप्राः श्राद्धकाल उपस्थिते ।
वसेयुर्नियताहारा ब्रह्मचर्यपरायणाः ॥
अहिंसा सत्यमक्रोधो दूरे चागमनक्रिया ।
अभारोद्वहनञ्चेति श्राद्धस्योपासनाविधिः"—इति ॥

तथाऽस्त्वित्यङ्गीकारः इति सामर्थ्यं अनिन्दितामन्त्रणविषयः । तथाच कात्यायनः । "अनिन्द्येनामन्त्रिते नातिक्रामेत्" । अन्येन न

प्रत्याख्यानं कर्त्तव्यमिति । यस्त्वामन्त्रणमङ्गीकृत्य सत्यपि सामर्थ्ये पश्चान्निवारयति तस्य दोषोऽस्ति । तथाच मनुः,—

"केतितस्तु* यथान्यायं हव्यकव्ये द्विजोत्तमः ।
कथञ्चिदप्यतिक्रामन् पापः शूकरतां व्रजेत्"—इति ॥

केतितो निमन्त्रितः । यमोऽपि,—

"आमन्त्रितश्च यो विप्रो भोक्तुमन्यत्र गच्छति ।
नरकाणां शतं गत्वा चण्डालेष्वभिजायते"—इति ॥

निमन्त्रितब्राह्मणपरित्यागे प्रत्यवायोऽस्ति । तथाच नारायणः,—

"निकेतनं कारयित्वा निवारयति दुर्मतिः ।
ब्रह्महत्यामवाप्नोति शूद्रयोनौ च जायते"—इति ॥

यस्त्वामन्त्रितो विप्रस्त्वाहूतोऽपि श्राद्धकालातिक्रमं करोति तस्य प्रत्यवाय आदिपुराणेऽभिहितः,—

"आमन्त्रितश्चिरं नैव कुर्याद्विप्रः कदाचन ।
देवतानां पितॄणाञ्च दातुरन्नस्य चैव हि ॥
चिरकारी भवेद्द्रोही पच्यते नरकाग्निना"—इति ।

दातृभोक्त्रोर्ब्रह्मचर्यनियमातिक्रमे प्रत्यवायस्तु तत्र तत्रोक्तः । तत्र लघुमनुः,—

"ऋतुकालं† नियुक्तो वा नैव गच्छेत् स्त्रियं क्वचित् ।
तत्र गच्छन् समाप्नोति ह्यनिष्टफलमेव तु"—इति ॥

---

* केतित,—इति पाठः से० का० । एवं परत्र ।

† ऋतुकालं प्राप्येति शेषः । ऋतुकाले,—इति समीचीनः पाठः ।

गौतमः। "श्वः श्राद्धी शूद्रातल्पगस्तत्पुरीषे मासं नयेत पितॄन्"—इति। श्राद्धी श्राद्धकर्त्ता श्वस्तनमारभ्येत्यर्थः। मनुः,—

"आमन्त्रितस्तु यः श्राद्धे वृषल्या सह मोदते।
दातुर्यद्दुष्कृतं किञ्चित् तत्सर्वं प्रतिपद्यते"—इति॥

यमः,—

"आमन्त्रितस्तु यः श्राद्धे अध्वानं प्रतिपद्यते।
भवन्ति पितरस्तस्य तन्मासं पांशुभोजनाः"—इति॥

श्राद्धदिनकृत्यं प्रचेतसा दर्शितम्,—

"श्राद्धभुक् प्रातरुत्थाय प्रकुर्याद्दन्तधावनम्।
श्राद्धकर्त्ता तु कुर्वीत न दन्तधावनं बुधः"—इति॥

देवलोऽपि,—

"तथैव यन्त्रितो दाता प्रातः स्नात्वा सहाम्बरः।
आरभेत नवैः पात्रैरन्वारम्भं सबान्धवैः॥
तिलांश्च विकिरेत्तत्र सर्वतो बन्धयेदजान्।
असुरापहृतं सर्वं तिलैः शुध्यत्यजेन च॥
ततोऽन्नं बहुसंस्कारं नैकव्यञ्जनमव्ययम्।
चोष्यपेयसमृद्धं च यथाशक्ति प्रकल्पयेत्"—इति॥

अथ द्रव्याणि प्रचेता आह,—

"कृष्णमाषास्तिलाश्चैव श्रेष्ठाः स्युर्यवशालयः।
महायवा व्रीहियवास्तथैव च मधूलिकाः॥
कृष्णाः श्वेताश्च लोहाश्च ग्राह्याः स्युः श्राद्धकर्मणि"—इति।

कृष्णाः सितशूकाः शालयः कलमाद्याः। महायवा व्रीहियवाश्च

"सुगन्धिमत्स्यमांसश्च कषायाः सर्वएव च ।
एवमादीनि चान्यानि स्वादूनि मधुराणि च॥
नागरङ्गाच वै देयं दीर्घमूलकमेव च"—इति।

मृद्वीका द्राक्षा। आम्रातकः कपीतनः। भव्यचविका। अक्षोटः शैलोद्भवः। कसेरु भद्रमुस्ता। कालेयकं दारुहरिद्रा। सुनिषणं चितुक-शाकम्। कट्फलं श्रीपर्णिका। लकुचो लिकुचः। मोचं कदलीफलं। कर्कन्धूर्बदरी। तिन्दुकः शितिसारकः। शृङ्गाटकं जलजत्रिकण्टकम्। हस्तीफलं गिरिङ्गिकाफलम्। दीर्घमूलकमुष्टिकेरीफलम्। बिल्वाम-लकादीनि प्रसिद्धानि। पारेवतपरूषकादीन्यप्रसिद्धानि। शङ्खोऽपि,—

"आम्रान् पारेवतानिक्षून् मृद्वीकां भव्यदाडिमम्।
विदारींश्च भरण्डांश्च श्राद्धकालेऽपि दापयेत्।
द्राक्षामधुयुतां दद्यात् सक्तून् शर्करया सह॥
दद्याच्छ्राद्धे प्रयत्नेन शृङ्गाटककसेरुकान्"—इति।

आदित्यपुराणेऽपि,—

"मधूकं रामठश्चैव कर्पूरं मरिचं गुडम्।
श्राद्धकर्मणि शस्तानि सैन्धवं त्रपुषं तथा"—इति॥

अत्र विशेषो मार्कण्डेयेन दर्शितः,—

"गोधूमैरिक्षुभिर्मुद्गैः सतीनैश्चणकैरपि ।
श्राद्धेषु दत्तैः प्रीयन्ते मासमेकं पितामहाः॥
विदार्याश्च भरुण्डैश्च बिसैः शृङ्गाटकैस्तथा।
केमुकैश्च तथा कन्दैः कर्कन्धुबदरैरपि॥
पारेवतैरारुकैश्चाप्याक्षोटः पनसैस्तथा।

षण्मासांश्छागमांसेन पार्षतेनेह सप्त वै[1]।
अष्टावेणस्य मांसेन रौरवेण नवैव तु॥
दश मासांस्तु तृप्यन्ति वराहमहिषामिषैः।
शशकूर्मयोस्तु मांसेन मासानेकादशैव तु॥
संवत्सरन्तु गव्येन पयसा पायसेन वा।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी॥
कालशाकं महाशल्कं खड्गं लोहामिषं मधु।
आनन्त्यायैव कल्प्यन्ते मुन्यन्नानि च सर्वशः"—इति॥

वार्ध्रीणसो रक्तवर्णवृद्धच्छागलः। तदुक्तं विष्णुधर्मोत्तरे,—

"त्रिपिबन्त्विन्द्रियक्षीणं[2] यूथस्याग्रचरं तथा।
रक्तवर्णन्तु राजेन्द्र, छागं वार्ध्रीणसं विदुः"—इति॥

पक्षिविशेषो वा,—

"कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः।
स वै वार्ध्रीणसः प्रोक्त इत्येषा वैदिकी श्रुतिः"—इति

निगमवचनात्। कालशाकमुत्तरदेशे प्रसिद्धम्। महाशल्को मत्स्यविशेषः। खड्गः खड्गमृगः। लोहो लोहितवर्णश्छागः। मुन्यन्नानि नीवाराद्यन्नानि। श्राद्धे कोद्रवादिधान्यानि वर्जयेत्। तदाह व्यासः,—

"अश्राद्धेयानि धान्यानि कोद्रवाः पुलकास्तथा।
हिङ्गुद्रव्येषु शाकेषु कलायलशुनास्तथा"—इति॥

---

(१) पार्षतादयो मृगजातिविशेषाः।

(२) जलपानकाले यस्यास्यं नासिकाद्वयं च जले निमज्जति, सोऽयं त्रिपिब इत्युच्यते। त्रिभिर्नासिकाद्वयमुखैः पिबतीति व्युत्पत्तेः।

कोद्रवाः कोरदूषकाः। पुलकाः पुलाकाः शाल्यादयोऽत्र तुषाः। संस्कारकद्रव्येषु हिङ्गुद्रव्यमश्राद्धेयम्। काचः कृष्णशुंकः। अलक-स्थिपकः। शुभा शुभाख्यः शाकविशेषः। एतानि शाकान्यश्राद्धेयानि। ननु,—

"मधूकं रामठञ्चैव कर्पूरं मरिचं गुडम्"—इति

आदिपुराणे हिङ्गुद्रव्यस्य श्राद्धेयत्वमुक्तं, तत्कथं तस्याश्राद्धेयत्वमुच्यते,—इति। सत्यं, "अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाति"—इति वदत्रापि विधिप्रतिषेधदर्शनाद्विकल्पोऽस्तु। एवमेवान्यत्रापि। भारद्वाजोऽपि। "मुद्गाढकीमाषवर्जं विदलानि दद्यात्"—इति। मुद्गः कृष्णेतरः, आढकी तुवरी, माषो राजमाषः, एतैर्विना विदलानि दद्यादित्यर्थः। माषग्रहणं कुलत्थादीनामुपलक्षणार्थम्। अतएव चतुर्विंशतिमतम्,—

"कोद्रवानाजमाषांश्च कुलत्थान्वरकांस्तथा ।
निष्पावांस्तु विशेषेण पञ्चैतांस्तु विवर्जयेत् ॥
यावनालानपि तथा वर्जयन्ति विपश्चितः"—इति ।

वरकाः वनमुद्गाः। अन्यत्प्रसिद्धम्। अत्र निष्पावनिषेधः कृष्ण-निष्पावविषयः,

"कृष्णधान्यानि सर्वाणि वर्जयेत् श्राद्धकर्मणि"—इति

स्मरणात्। "निष्पावाश्चात्र शोभनाः"—इति मार्कण्डेयपुराणं कृष्णेतरनिष्पावविषयतया व्यवस्थापितं भवति। मरीचिरपि,—

"कुलत्थाश्चणकाः श्राद्धे न देयाश्चैव कोद्रवाः ।
कटुकानि च सर्वाणि विरसानि तथैव च"—इति॥

नानि । रक्तकष्ठाः हिमचयावृद्धमनिकृत्तरज्जवः । भरद्वाजोऽपि,—

"जम्बोदुम्बरजम्बीरं पनसाम्रं तथैव च ।
आम्रातं कुशाखफलं नलकन्दञ्च पिप्पली ॥
तप्तक्षीरकमाकञ्च माहिषञ्च पयोदधि ।
शिग्रुकानि करीराणि कोविदारगवेधुकम् ॥
कुलत्थमथकश्मीरकरञ्जानि तथैव च ।
अश्मगन्धाञ्च पुष्पं त्रिपुःक्षारं तथैव च ॥
नीरजान्यपि सर्व्वाणि भक्ष्यभोज्यानि यानि च ।
एतानि नैव देयानि सर्व्वेषाम् श्राद्धकर्मणि ॥
आविकं मार्गमौष्ट्रञ्च सर्व्वमैकशफञ्च यत् ।
माहिषञ्चामरञ्चैव पयो वर्ज्यं विजानता"—इति ॥

आविकमवीनां पयः । मार्गं मृगीणां पयः । औष्ट्रमुष्ट्रीणां पयः । ऐकशफं वडवापयः । माहिषं महिषीपयः । चामरं चमरीपयः । ब्रह्माण्डपुराणेऽपि,—

"हिःक्षितं परिदग्धञ्च तथैवाग्न्यावलेहितम् ।
शर्कराकीटपाषाणैः केशैर्यच्चाप्युपद्रुतम् ॥
पिण्याकं मथितञ्चैव तथातिलवणञ्च यत् ।
दधि शाकं तथा भक्ष्यमुष्णञ्चोपविवर्ज्जितम् ॥
वर्ज्जयेच्च तथा धान्यान् सर्वानभिमतानपि ।
विप्राः खलाश्च ये भक्ताः प्रतिषिद्धाश्च वीक्षिताः ॥
वाग्भावदुष्टाश्च तथा दुष्टैश्चोपहृताश्च या ।
वाससा चोपधूतानि वर्ज्यानि श्राद्धकर्मणि"—इति ॥

द्विःस्विन्नं द्विःपक्वम्[1]। परिदग्धमतिदग्धम्। अग्रावलेहितं पूर्व-मेवान्येनास्वादितम्। मथितं विलोलितं निर्जलं दधि। शिग्रु-भवा श्यामलकादयः, प्रत्यक्षवचनेन निषिद्धाः। शङ्खोऽपि,—

"कृष्णाजाजीं विडञ्चैव शीतपाकीं तथैव च।
वर्जयेल्लवणं सर्वं तथा जम्बूफलानि च॥
अवक्षुतावरुदितं तथा श्राद्धेषु वर्जयेत्"—इति।

कृष्णाजाजी कृष्णजीरकः। विडमित्राख्यम्। लवणं कृत-कलवणम्। श्राद्धे कुष्माण्डादिनिषिद्धद्रव्योपादाने प्रत्यवायोऽस्ति। तथाच स्मृत्यन्तरम्,—

"कुष्माण्डं महिषीक्षीरं आढक्योराजसर्षपाः।
चणकाराजमाषाश्च घ्नन्ति श्राद्धमसंशयः॥
पिण्डालुकञ्च शुण्ठीं च करमर्दांश्च नालिकाम्।
कुष्माण्डं बहुबीजानि श्राद्धे दत्वा प्रयात्यधः"—इति॥

करमर्दः सुषेणः। बहुबीजानि बीजपूरादीनि। नित्यभोजने प्रतिषिद्धमपि श्राद्धे न देयम्। अतएवोक्तं षट्त्रिंशन्मते,—

"क्षीरादि महिषीजन्यं अभक्ष्यं यच्च कीर्त्तितम्"—इति।

नित्यभोजने वर्ज्यानि शाकानि पैठीनसिनोक्तानि। "कलाक-नालिकापोतकुसुम्भाश्मन्तकांश्चेति शाकानामभक्ष्याश्च"—इति। पोतं पोतिका। कलाकनिषेधस्तु नेतरशाकविषयः। अतएव देवलः,—

(१) द्विःपक्वं च तदेव, यत् सूपकारशालायां पाकमभिव्यक्त्यनन्तरं शैत्यादिनिवृत्तये पुनः पाकान्तरयुक्तम्। न तर्ह्यपाकानन्तरं तद्भाजनान्तरसञ्चारणपाकान्तरयुक्तं पक्वान्नादि। अतीतार्थविकारनिर्देशात्।

"कच्छूरं श्वेतवृन्ताकं कुम्भाण्डञ्च विवर्जयेत्"—इति।

कच्छूराख्यशाकवती, तस्याः फलं कच्छूरम्। कुम्भतुल्यवर्तुलं वृन्ताकानुरूपं कुम्भाण्डम्। भविष्यपुराणेऽपि,—

"लशुनं गृञ्जनञ्चैव पलाण्डुकवकानि च।

वृन्ताकनालिकाशाकं जातीयान्यतिदूषितम्"—इति॥

लशुनं श्वेतकन्दः पलाण्डुविशेषः,—

"लशुनं दीर्घपत्रञ्च पिच्छगन्धो महौषधम्।

परञ्च पलाण्डुञ्च सनाकश्च परारिका॥

गृञ्जनं यवनेष्टञ्च पलाण्डोर्दश जातयः"—इति

सुश्रुतेनोक्तत्वात्। कवकं छत्राकम्। हारीतोऽपि। "न वटप्लक्षो-दुम्बरदधित्थनीपमातुलुङ्गानि वा भक्षयेत्"—इति। मनुरपि,—

"लोहितान् वृक्षनिर्यासान् व्रश्चनप्रभवांस्तथा।

शेलुं गव्यञ्च पीयूषं प्रयत्नेन विवर्जयेत्"—इति॥

लोहिता वृक्षनिर्यासा लाक्षादयः। लोहितग्रहणात् निर्यासत्वेऽपि पाटलश्वेतवर्णहिङ्गुकर्पूरादेरप्रतिषेधः। शेलुः श्लेष्मातकः। पीयूषोऽभिनवपयः। मत्स्यपुराणे,—

"इतराश्लेषं इतराभक्ष्यं पीयूषमथ शार्ङ्गिणः।

न गुडं मरिचाक्तन्तु तथा पर्युषितं दधि॥

दीर्घं तक्रमपेयञ्च गव्यादु च फेनवत्"—इति।

इतराहृत्य तत्फेनमात्रं न पेयम्। इतराहृत्य भक्ष्यं तदपि न पेयम्। शार्ङ्गिणः प्रसवप्रभृत्यनिर्दशरात्रस्य गोः पीयूषं न पेयम्। गुडं मरिचोपगतं पर्युषितं दधि च, दीर्घं खुटितं तक्रं

दीर्घकालस्थिताया गव्यास्तु च फेनवत्र न पेयम्। याज्ञवल्क्योऽपि,—

"सन्धिन्यनिर्दशाऽवत्सगोः पयः परिवर्जयेत्।
औष्ट्रमैकशफं स्त्रैणमारण्यकमथाविकम्"—इति॥

या वृषेण सन्धीयते सा सन्धिनी, अनिर्दशा अनिर्गतदशरात्रा, अवत्सा वत्सरहिता। एतासां गवां पयः परिवर्जयेत्। आरण्यकपयो-निषेधस्त्वारण्यकमहिषीव्यतिरिक्तविषयः। तदाह मनुः,—

"अनिर्दशाया गोः क्षीरमौष्ट्रमैकशफं तथा।
आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः॥
आरण्यानाञ्च सर्वेषां मृगाणां महिषीं विना"—इति।

वसिष्ठोऽपि। "गोमहिष्यजानामनिर्दशाहानां पयो न पेयम्"—इति। गौतमोऽपि। "स्यन्दिनीयमसूसन्धिनीनाञ्च"—इति। क्षीरं न पेयमिति शेषः। स्यन्दिनी स्तनएव स्रवत्पयःस्तनी। यमसूर्यमलप्रसूः। बोधायनोऽपि। "क्षीरमपेयं विवत्साया अन्यवत्सायाश्च"—इति। आपस्तम्बोऽपि,—

"क्षत्रियश्चैव हस्तस्थो वैश्यः शूद्रोऽथवा पुनः।
यः पिबेत्कापिलं क्षीरं न ततोऽन्योऽस्त्यपुण्यकृत्"—इति॥

ज्ञात्वा विशुद्धमपि केशकीटादिसंसर्गदुष्टमान्नं वर्जयेत्। तदाह देवलः,—

"विशुद्धमपि चाहारं मक्षिकाकृमिजन्तुभिः।
केशरोमनखैर्वाऽपि दूषितं परिवर्जयेत्"—इति॥

अत्र मक्षिकाकृमिजन्तवो मृताः विवक्षिताः। एतैः केशरोमादि-भिश्च दूषितं सति सम्भवे वर्जयेत्, असम्भवे तु केशादिकमुद्धृत्य

सम्प्रोक्ष्य हिरण्यस्पर्शं कृत्वा भुञ्जीत। तथाच सुमन्तुः। "केशकीट-कुनखोपहतं अभिराघ्रातं लेहितं वा अवधूतं पर्युषितं पुनः सिद्धं चण्डालावेक्षितं अभोज्यं अन्यत्र हिरण्योदकैः स्पृष्टा"—इति। कुनखः कुनखाग्रजातो ध्वनिः। आपद्यपि श्वादिभिरवलीढं न भुञ्जीत। तथाच देवलः,—

"अवलीढं श्वमार्जारध्वांक्षकुक्कुटमूषकैः।
भोजने नोपभुञ्जीत तदमेध्यं हि सर्वतः"—इति॥

भविष्यत्पुराणेऽपि,—

"सुराद्यन्नसंस्पृष्टं पीयूषादिसमन्वितम्।
संसर्गाद्दुष्यते तद्धि शूद्रोच्छिष्टवदाचरेत्"—इति॥

श्वादिशब्देन कृकवाकादिदुष्टद्रव्यं परिगृह्यते। स्मृत्यन्तरे वर्ज्या-न्तरमुक्तम्,—

"नापचीयं समश्नीयाद् द्विःपक्वं न पर्युषितम्।
घृतं वा यदि वा तैलं विप्रो नाद्यात् नखच्युतम्।
यमस्तदपि प्राह तुल्यं गोमांसभक्षणैः॥
हस्तदत्ताश्च ये स्नेहा लवणव्यञ्जनानि च।
दातारं नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्बिषम्॥
दर्वेण पाणिना दत्तं शूद्रादत्तं न भक्षयेत्"—इति।

आपक्वपाकप्रतिषेधोऽपूपादिव्यतिरिक्तविषयः। तदाह मनुः,—

"अपूपाः सक्तवो धाना तक्रं दधि घृतं मधु।
एतत् पण्येषु भोक्तव्यं भाण्डलेपि न चेद्भवेत्"—इति॥

पर्युषितनिषेधोऽपि वटकादिव्यतिरिक्तविषयः। तदाह यमः,—

"अपूपाश्च करम्भाश्च धानावटकसक्तवः ।
शाकं मांसमपूपाश्च* सूपं कृसरमेव च ॥
यवागूः पायसञ्चैव यच्चान्यत् स्नेहसंयुतम् ।
सर्वं पर्युषितं भोज्यं शुक्तं चेत् परिवर्जयेत्"—इति ॥

देवलोऽपि,—

"अभोज्यं प्राकृताकारं शुक्तं पर्युषितञ्च यत् ।
अपूपा यवगोधूमविकारा वटकादयः"—इति ॥

वटका माषादिपिष्टमया प्रसिद्धाः । पुनरपूपग्रहणं गोधूमादिपिष्टविकारोपादानार्थम् । कृसरं घृततिलचूर्णसंयुतमोदनम् । अन्यदोदनादिकं स्नेहसंयुतं घृतेन दध्ना वाऽभिघारितम् । एतत्सर्वं पर्युषितमप्यशुक्तं भोज्यम् । शुक्तस्वरूपं हरदत्तेनोक्तम्,—

"यत्सर्वं शुक्तमाख्यातं निन्दितं ब्रह्मवादिभिः"—इति ॥

यदम्लीभूतं वा यदस्तु कालान्तरेण वा द्रव्यान्तरसंसर्गेण वाऽम्लत्वं भवति तच्छुक्तं, न तु स्वभावतोऽम्लम् । यदग्निपक्वं सद्रात्र्यन्तरितं, तत्पर्युषितम् । शुक्तप्रतिषेधो दध्यादिव्यतिरिक्तविषयः । तदाह मनुः,—

"दधि भक्ष्यञ्च शुक्तेषु सर्वञ्च दधिसम्भवम् ।
सौवीरकं भक्ष्यं स्यात् सर्पिर्युक्तमिति स्थितिः"—इति ॥

अनग्निपक्वता सौवीरे, तेन यदि शुक्तं पर्युषितमापदि प्रक्षालितं भोज्यम् । तदाह यमः,—

* मांसं मधूरञ्च,—इति मु० ।
† तुषीधान्यं,—इति सो० शा० ।
‡ तुषीवं,—इति सो० शा० ।

चक्रकारी। रजको वस्त्ररागकारी। वेणुधावो वस्त्रप्रक्षालकः। एषां कदर्यादिसोमविक्रयिपर्यन्तानां त्रैवर्णिकानामन्नं न भोक्तव्यमित्यर्थः। यमोऽपि,—

"चक्रोपजीवी गान्धर्वः कितवस्तस्करस्तथा।
ध्वजी दारोपजीवी च शूद्राध्यापकयाजकौ॥
कुलालश्चित्रकर्मा च वार्धुषी चर्मविक्रयी"—इति।

चक्रोपजीवी शकटोपजीवी। गान्धर्वो गायकः। ध्वजी मद्यविक्रयी। इतरे प्रसिद्धाः। एते अभोज्यान्ना इत्यर्थः। आपस्तम्बोऽपि,—

"द्वावेवाश्रमिणौ भोज्यौ ब्रह्मचारी गृही तथा।
मुनेरन्नमभोज्यं स्यात् सर्वेषां लिङ्गिनां तथा"—इति॥

मुनिशब्देन यतिवानप्रस्थौ गृह्येते। लिङ्गिनः पाशुपतादयः। अङ्गिरा अपि,—

"षण्मासान् यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितम्।
स तु जीवन् भवेच्छूद्रो मृतः श्वा चाभिजायते"—इति॥

यत्तु सुमन्तुनोक्तम्,—

"गोरसञ्चैव सक्तूंश्च तैलं पिण्याकमेव च।
अपूपान् भक्षयेच्छूद्राद्यच्चान्यत् पयसा कृतम्"—इति॥

यच्च विष्णुपुराणेऽभिहितम्,—

सम्प्रोक्ष्य विप्रो गृह्णीयाच्छूद्रान्नं गृहमागतम्"—इति।

तदापद्विषयम्। अतएव याज्ञवल्क्यः,—

"अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि"—इति।

अग्निहीनः शूद्रः। मांसेष्वपि यदन्यं तदाह मनुः,—

"क्रव्यादान् शकुनीन् सर्वांस्तथा ग्रामनिवासिनः।
अनिर्दिष्टांश्चैकशफांष्टिट्टिभांश्च विवर्जयेत्॥
कलविङ्कं प्लवं हंसं चक्राह्वं ग्रामकुक्कुटम्।
सारसं रज्जुदालञ्च दात्यूहं शुकसारिके॥
प्रतुदान् जालपादांश्च कोयष्टिनखविष्किरान्।
निमज्जतश्च मत्स्यादान् शौनं वल्लूरमेव च॥
बकञ्चैव बलाकाञ्च काकोलं खञ्जरीटकान्।
मत्स्यादान् विड्वराहांश्च मत्स्यानेव च सर्वशः"—इति॥

क्रव्यादाः शकुनयो गृध्रादयः। ग्रामनिवासिनः शकुनयः पारावतादयः। अनिर्दिष्टा अपरिज्ञातजातिविशेषा मृगपक्षिणः। एकशफा अश्वादयः। टिट्टिभः निष्ठुरशब्दभाषी पक्षिविशेषः। कलविङ्कश्चटकः। प्लवो जलकुक्कुटः। चक्राह्वश्चक्रवाकः। सारसः पुष्कराह्वः। रज्जुदालको-रज्जुवत्पुच्छकः*। दात्यूहः कालकण्ठकः। प्रतुदः श्येनः। जालपादाः जालाकारपादाः। कोयष्टिः पक्षिविशेषः। नखविष्किराश्चकोरादयः। निमज्जन्तो मत्स्यादा निमज्ज्य मत्स्यभक्षकाः पक्षिविशेषाः। शौनं शूनो-द्भवमांसम्†। वल्लूरं शुष्कमांसम्। काकोलो गिरिकाकः। खञ्जरीटः खञ्जनः। मत्स्यादा अनिमज्ज्यापि मत्स्यादा विवक्षिताः। विड्वराहा-ग्राम्यशूकराः। अत्र मत्स्यनिषेधो राजीवसिंहतुण्डकादिव्यतिरिक्त-विषयः। अत एवोक्तमनेनैव,—

---

* रज्जुकुक्कुटः,—इति मु०।

† शूनायां भवं मांसम्,—इति मु०।

"राजीवाः सिंहतुण्डाश्च सशल्काश्चैव सर्वशः"—इति।

राजीवाः पद्मवर्णाः मत्स्याः। सिंहतुण्डाः सिंहमुखाः। शल्कैः शकलाकारावयवैः पृष्ठभागगतैः सह वर्त्तन्ते इति सशल्काः। एते सर्वशः श्राद्धे नित्यभोजने च भक्ष्या इत्यर्थः। देवलोऽपि,—

"उलूककुररश्येनमद्गुकुक्कुटवायसाः।
चकोरः कोकिलो रज्जुदालकश्चापमद्गुकौ॥
पारावतकपोतौ च न भक्ष्याः पक्षिणः स्मृताः।
अभक्ष्याः पशुजातीनां गोखरोष्ट्रकुञ्जराः॥
सिंहव्याघ्रर्क्षशरभाः सर्पाजगरकास्तथा।
आखुमूषकमार्जारनकुलश्वानसूकराः॥
मद्गुनाक्रकदीपिगोलाङ्गूलकमर्कटाः"—इति।

कुररः उत्क्रोशः। मद्गुर्जलकाकः। दीपिशब्दो व्याघ्रविशेषपरः। गोलाङ्गूलो वानरविशेषः। मर्कटग्रहणं सर्वेषां पञ्चनखानामुपलक्षणार्थम्। अतएव मनुः। "सर्वान्पञ्चनखांस्तथा"—इति। न भक्षयेदिति योजना। अयं पञ्चनखानां भक्षणनिषेधो गोधादिपञ्चकव्यतिरिक्तविषयः। तथाच देवलः,—

"पञ्च पञ्चनखा भक्ष्या धर्मतः परिकीर्त्तिताः।
गोधा कूर्मः शशः श्वाविट् शल्यकश्चेति ते स्मृताः"—इति॥

धर्मत इति हिंसाजन्यप्रत्यवायाभावाद्भक्ष्या इत्यर्थः। न चायमपूर्वविधिः, रागप्राप्तस्यानुवादत्वात्। नापि नियमः, पक्षप्राप्त्यभावात्। अतो गोधादिपञ्चनखपञ्चकव्यतिरिक्ता न भक्ष्या इति परिसंख्यैव परिशिष्यते। एवञ्च सति विशेषनिषेधवाक्यस्यानुवादकत्वे अनवायो-

नेतरथेत्यवगम्यते । अतएवोक्तं मनुना,—

"न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला"—इति ॥

यत्तु तेनैवोक्तम्,—

"नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् ।
न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्जयेत् ॥
समुत्पत्तिञ्च मांसस्य वधबन्धौ च देहिनाम् ।
प्रसमीक्ष्य निवर्त्तेत सर्व्वमांसस्य भक्षणात्"—इति ॥

यच्च याज्ञवल्क्येनापि,—

"वसेत्स नरके घोरे दिनानि पशुरोमभिः ।
सम्मितानि दुराचारो यो हन्त्यविधिना पशून्"—इति ॥

तदविधिप्राणिहिंसापूर्व्वकमांसभक्षणविषयं, न तु क्रयादिप्राप्त-मांसभक्षणविषयं, प्राणिवधनिन्दापूर्व्वकमेव मांसनिषेधकरणात् । यच्च मनुनैवोक्तम्,—

"फलमूलाशनैर्मेध्यैर्मुन्यन्नानाञ्च भोजनैः ।
न तत्फलमवाप्नोति यन्मांसपरिवर्ज्जनात्"—इति ॥

तच्च मांसवर्ज्जनस्य महाफलसाधनत्वं प्रोक्षितादिव्यतिरिक्तविषयम् । अतएवोक्तन्तेनैव,—

"प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानाञ्च काम्यया ।
यथाविधि नियुक्तस्तु प्राणानामेव चात्यये"—इति ॥

प्रोक्षितमिति हविष्टं मांसं, ब्राह्मणस्य काम्यया ब्राह्मणकामनया च,*

---

* ब्राह्मणकामनायां च,—इति से० पा० ।

यथाविधि नियुक्तः श्राद्धे निमन्त्रितश्च, प्राणात्यये क्षुन्निमित्ते व्याधिनिमित्ते वा, मांसं भक्षयेदित्यर्थः प्रघट्टकस्य प्रघट्टार्था।

निमन्त्रितेभ्यो ब्राह्मणेभ्यो यद्देयं तदाह कात्यायनः,—

“तैलमुद्वर्त्तनं स्नानं दन्तधावनमेव च।
कृत्तरोमनखेभ्यस्तु दद्यात्तेभ्योऽपरेऽहनि”—इति॥

स्नानं स्नानसाधनम्। दन्तधावनं दन्तधावनसाधनं काष्ठादि, दद्यादित्यर्थः। एतत्तैलादिदानमनिषिद्धतिथिविषयम्। निषिद्धतिथिषु तिलतैलप्रतिनिधित्वेनामलकोदकं दद्यात्। तथाच मार्कण्डेयः,—

“ततः षट्सु मुहूर्त्तेषु गतेषु च यतान्* द्विजान्।
प्रत्येकं प्रेषयेत् प्रेष्यान् प्रदायामलकोदकम्”—इति॥

आमलकोदकदानमप्यमावास्याव्यतिरिक्तविषयम्। “धात्रीफलैरमावास्यायां न स्नायात्”—इति स्मृत्यन्तरे निषेधात्। तैलादिदाने विशेषो देवलेन दर्शितः,—

तैलमुद्वर्त्तनं स्नानं स्नानीयञ्च पृथग्विधम्।
पात्रैरौदुम्बरैर्दद्याद्वैश्वदेविकपूर्वकम्”—इति॥

औदुम्बरं ताम्रपात्रम्। यत्तु प्रचेतसोक्तम्,—

“श्राद्धभुग्भ्यो नखश्मश्रुच्छेदनं न तु कारयेत्”—इति।

तन्निषिद्धतिथिविषयम्। श्राद्धदेशे प्रशस्तानि द्रव्याणि पुराणेऽभिहितानि,—

“तपमूलं शकूनाम् कुशांस्तत्रोपकल्पयेत्।
पर्वाङ्कितान् मौञ्जीः कांस्यमापः प्रशस्ते चमावृताः॥

---

* यतोऽमपश्च तान्,—इति मु०।

पार्थराजतताम्राणि पात्राणि श्राद्धकर्मसु ।
पुष्पधूपसुगन्धादि क्षौमसूत्रञ्च केवलम्"—इति ॥

तिला जर्त्तिला ग्राम्याश्चेत्युभये ग्राह्याः। जर्त्तिलस्वरूपमुक्तं वत्स-प्रतेन,—

"जर्त्तिलास्तु तिलाः प्रोक्ताः कृष्णवर्णा वनेभवाः"—इति।

तेषां प्रशस्तत्वमापस्तम्ब आह,—

"अटव्यां ये समुत्पन्ना अकृष्टफलितास्तथा ।
ते वै श्राद्धे पवित्रास्तु तिलास्ते न तिलास्तिलाः*"—इति ॥

निमन्त्रितब्राह्मणानामुपवेशनार्थमासनं दर्भाः। तत्र विशेषो मनुनोक्तः। "कुतपञ्चासने दद्यात्"—इति। कुतपो नेपालदेशप्रभवमेषादिरोमनिर्म्मितकम्बलः। तदुक्तं स्मृत्यन्तरे,—

"मध्याह्नः खड्गपात्रञ्च तथा नेपालकम्बलः ।
रूप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः ॥
पापं कुत्सितमित्याहुस्तस्य सन्तापकारणम् ।
अष्टावेते यतस्तस्मात् कुतपा इति विश्रुताः"—इति ॥

कांस्यपार्थराजतताम्रपात्राणि भोजनार्थमर्घार्थं चोपकल्प्यानि। अत्र भोजनार्थं पलाशपत्रपात्राण्येवोपकल्प्यानि न त्वन्यपर्णपात्राणि। तथाचात्रिः,—

"न मृण्मयानि कुर्वीत भोजने देवपित्र्ययोः ।
पालाशेभ्यो विना न स्युः पर्णपात्राणि भोजने"—इति ॥

---

* ते वै श्राद्धेषु देयाः स्युस्तिलास्ते जर्त्तिलाः स्मृताः,—इति मु० ।

अर्कपर्णं लम्बपर्णपाशाश्चनिषिद्धानि । अतएव बैजावापः,—

"खादिरौदुम्बराश्वत्थपर्णानि आखुकर्णानि ।
अप्यश्मन्तकपर्णानि कुरपि पर्णपुटास्तथा"—इति ॥

अथोपकल्पनीयं पुष्पं ब्रह्माण्डपुराणे दर्शितम्,—

"शुक्लाः सुमनसः श्रेष्ठास्तथा पद्मोत्पलानि च ।
गन्धरूपोपपन्नानि यानि चान्यानि कृत्स्नशः"—इति ॥

मार्कण्डेयपुराणेऽपि*,—

"जात्यश्च सर्व्वा दातव्या मल्लिकाः श्वेतयूथिकाः ।
जलोद्भवानि सर्व्वाणि कुसुमानि च चम्पकम्"—इति ॥

यत्त्वङ्गिरसोक्तम् । "न जातीकुसुमानि न कदलीपत्रम्"—इति । क्रतुरपि,—

"असुराणां कुले जाता जाती पूर्वपरिग्रहे ।
तस्या दर्शनमात्रेण निराशाः पितरो गताः"—इति ॥

अत्र जातीकुसुमनिषेधो वैकल्पिकः । अथ वर्ज्यानि कुसुमानि मत्स्येनोक्तानि†,—

"पद्मबिल्वार्कधुस्तूरपारिभद्राटरूषकाः‡ ।
न देयाः पितृकार्य्येषु पयश्चैवाविकं तथा"—इति ॥

पारिभद्रो मन्दारः, आटरूषो वासकः । शङ्खोऽपि,—

---

* नास्त्येतत् मु० पुस्तके ।

† तेनैवोक्तानि,—इति मु० ।

‡ कष्मारः,—इति को० मा० ।

"उग्रगन्धीन्यगन्धीनि चैत्यवृक्षोद्भवानि च(१)।
पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च"—इति॥

अत्र रक्तवर्णनिषेधो जलोद्भवव्यतिरिक्तविषयः। अतएवोक्तमन्येनैव,—

"जलोद्भवानि देयानि रक्तान्यपि विशेषतः"—इति।

विष्णुरपि। "वर्जयेदुग्रगन्धीनि* कण्टकिजातानि रक्तानि पुष्पाणि च, सितानि सुगन्धीनि कण्टकिजातान्यपि दद्यात्"—इति।

धूपद्रव्यमपि विष्णुधर्मोत्तरे दर्शितम्,—

"धूपो गुग्गुलको देयस्तथा चन्दनसारजः।
अगरुश्च सकर्पूरस्तुरुष्कस्त्वक् तथैव च"—इति॥

तुरुष्कः सल्लकीद्रवः, त्वक् लवङ्गम्। मरीचिरपि,—

"चन्दनागरुणी चोभे तमालोशीरपद्मकम्"—इति।

वर्जनीयधूपद्रव्यं विष्णुराह। "जीवजञ्च सर्वं न धूपार्थम्"—इति। (जीवजं कस्तूर्यादि।) "चन्दनकुङ्कुमकर्पूरागरुपद्मकान्यनुलेपनार्थे"—इति।

दीपार्थस्नेहद्रव्यमाह मरीचिः,—

"घृताद्वा तिलतैलाद्वा नान्यद्रव्यात्तु दीपकम्"—इति।

अत्र नान्यद्रव्यनिषेधो वसामेदोरूपद्रव्यविषयो(२) न पुनः कौसुम्भादितैलविषयः। अतएव,—

---

* वर्जयेदुग्रगन्धीन्यगन्धीनि,—इति मु०।

---

(१) चैत्यवृक्षः पूज्यत्वेन ख्यातो वृक्षः।
(२) वसामेदसु यथा तथा,—इत्यमरः।

"घृतेन दीपो दातव्यस्तथा वाऽप्यौषधीरसैः ।

वसामेदोद्भवं दीपं प्रयत्नेन विवर्जयेत्"—इति ॥

क्षौमवस्त्रोपकल्पनं यथालाभविषयं, सति सम्भवे क्षौमं वस्त्र-मुपकल्पनीयम् । अतएव स्मृत्यन्तरम्,—

"कौशेयं क्षौमकार्पासं दुकूलमहतं तथा ।

श्राद्धेष्वेतानि यो दद्यात्कामानाप्नोति पुष्कलान्"—इति ॥

कौशेयं कृमिकोशोत्पन्नम् । क्षौममतसीवल्कलतन्तु-सम्भवम् । दुकूलमिति सूक्ष्मवस्त्रम् । अहतम्,—

"ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् ।

अहतं तद्विजानीयात् सर्वकर्मसु पावनम्"—इति[1] ॥

एवं दर्भादिसेवनानां द्रव्याणामुपकल्प्य स्नात्वा शुक्लं वासः परि-दध्यात् । तथाच स्मृतिः,—

"स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि"—इति ।

"अहतशुक्लवासाः स्यात्"—इति ।

स्नानानन्तरं यत्कर्त्तव्यं तदाह यमः,—

"ततः स्नात्वा निवृत्तेभ्यः प्रत्युत्थाय कृताञ्जलिः ।

पाद्यमाचमनीयञ्च सम्प्रयच्छेद्यथाक्रमम्"—इति ॥

कृताञ्जलिः स्वागतमित्युक्त्वा पञ्चाङ्गतोयपरिपूर्णं पादप्रक्षा-लनार्थमाचमनीयार्थोदकं चैव प्रयच्छेदित्यर्थः । तदनन्तरं गृहाङ्गणे मण्डलद्वयं कार्यम् । तथाच मनुः,—

---

(१) कौशेयं क्षौमेत्यारभ्य इतदन्तो ग्रन्थो नास्ति मुद्रितादितर-पुस्तकेषु ।

"भवनस्यायतोभूमौ(१) ————

गोमयेनानुलिप्तायां गोमूत्रेण तु मण्डले"—इति ।

गोमयलिप्तेन गोमूत्रेण मण्डले कार्यं इति शेषः । तत्र विशेषमाह मनुः,—

"उदक्प्रवणमुदीच्यं* स्याद्दक्षिणं दक्षिणाप्रवम्"—इति ।

उदीच्यं वैश्वदेविकं मण्डलमुदक्प्रवणं, दक्षिणं पित्र्यं मण्डलं दक्षिणाप्रवणं कुर्यात् । तत्र मण्डलकरणप्रभृत्याश्राद्धपरिसमाप्तेर्वैश्वदेविकं कर्म प्रदक्षिणं यज्ञोपवीतिना कार्यं पित्र्यमपसव्यं प्राचीनावीतिना(२) कार्यम् । तथाच मनुः,—

"प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा ।

पित्र्यमानिधनात्कार्यं विधिवद्दर्भपाणिना"—इति ॥

अत्रैव विशेषान्तरमाह कात्यायनः,—

"दक्षिणं पातयेत् जानु देवान्परिचरन् सदा ।

पातयेदितरज्जानु पितॄन्परिचरन् सदा"—इति ॥

शातातपोऽपि,—

"उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः"—इति ।

बोधायनोऽपि,—

* उदङ्मुखमुदीच्यं—इति सो० पा० ।

(१) सर्वेष्वेवादर्शपुस्तकेषु श्लोकस्यास्य द्वितीयपादो न दृश्यते ।

(२) यज्ञोपवीतिप्राचीनावीतिनौ, "उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे प्राचीनावीतमन्यस्मिन्"—इत्यनेनोक्तौ । अपसव्यं पितृतीर्थं, "तर्जन्यङ्गुष्ठयोरन्तरा अपसव्यमवसर्पेत तेन पितृभ्यो दद्यात्"—इत्युक्तेः ।

“प्रदक्षिणन्तु देवानां पितॄणामप्रदक्षिणम्।
देवानामृजवो दर्भाः पितॄणां द्विगुणाः स्मृताः”—इति॥

मण्डलकरणानन्तरकर्त्तव्यमाह मनुः,—

“उत्तरेऽवततं कुर्य्यात्पूर्व्वाग्रान् विन्यसेत् कुशान्।
दक्षिणे दक्षिणाग्रांस्तु पतिताग्निक्षयेद्बुधः”—इति॥

मत्स्यपुराणेऽपि,—

“अक्षताभिः सपुष्पाभिस्तदभ्यर्च्यापसव्यवत्।
विप्राणां क्षालयेत्पादानभिनन्द्य पुनः पुनः”—इति॥

अपसव्यवत् पूर्व्वमुदीच्यमण्डलं पश्चाद्दक्षिणमण्डलमभ्यर्च्येत्यर्थः। दैवपूर्व्वकं विप्राणां पादप्रक्षालनं कुर्य्यात्। अतएव मनुनिरुक्तम्,—

“पाद्यञ्चैव तथैवार्घ्यं दैवमादौ प्रयोजयेत्।
प्रणोदेवीति मन्त्रेण पाद्यञ्चैव प्रदापयेत्”—इति॥

पाद्यादिदानं नामगोत्रोच्चारणपूर्व्वकं कर्त्तव्यम्। तदुक्तं मत्स्यपुराणे,—

“नामगोत्रं पितॄणान्तु प्रापकं हव्यकव्ययोः”—इति।

पादप्रक्षालनानन्तरं यत् कर्त्तव्यं तदाह सुमन्तुः,—

“दर्भपाणिर्द्विराचम्य लघुवासा जितेन्द्रियः।
परिश्रिते शुचौ देशे गोमयेनोपलेपिते॥
दक्षिणाप्रवणे सम्यगाचान्तान् प्रयतान् शुचीन्।
आसनेषु सदर्भेषु विविक्तेषूपवेशयेत्”—इति॥

विविक्तेषु परस्परमसंस्पृष्टेष्वित्यर्थः। मनुरपि,—

“आसनेषु तु कॢप्तेषु बर्हिष्मत्सु पृथक् पृथक्।

उपस्पृष्टोदकान् सम्यग्विप्रांस्तानुपवेशयेत्"—इति ॥

उपवेशनप्रकारो यमेन दर्शितः । "आसनं संस्पृशन् सव्येन पाणिना दक्षिणेन ब्राह्मणमुपसंगृह्य समाध्वमिति चोक्त्वोपवेशयेत्"—इति । धर्मेऽपि,—

"आचान्तांश्च ततो देवानुपवेश्य ततः पितॄन् ।
समस्ताभिर्व्याहृतिभिरासनेषूपवेशयेत्"—इति ॥

आदिपुराणेऽपि*,—

"विप्रौ तु प्राङ्मुखौ तेभ्यो द्वौ तु पूर्वं निवेशयेत् ।
यवोदेवीतिमन्त्रेण पाद्यं चैव प्रदापयेत्† ।
उत्तराभिमुखान्विप्रांस्त्रीन् पितृभ्यश्च सर्वदा"—इति ॥

याज्ञवल्क्योऽपि,—

"द्वौ दैवे प्राक् त्रयः पित्र्य उदगेकैकमेव वा ।
मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम्"—इति ॥

मातामहानामप्येवमिति संख्यादिङ्नियमयोरतिदेशः । वैश्वदेविकं कर्म श्राद्धद्वयार्थमावृत्त्याऽनुष्ठेयं तन्त्रेण वेत्यभिप्रेत्य तन्त्रं वा वैश्वदेविकमित्युक्तम् । अतएव मरीचिः,—

"तथा मातामहश्राद्धं वैश्वदेवसमन्वितम् ।
कुर्वीत भक्तिसम्पन्नस्तन्त्रं वा वैश्वदेविकम्"—इति ॥

अथ द्वयोरपि श्राद्धयोर्वैश्वदेविककर्मणः तन्त्रावृत्तिविधानादेक-

---

* आदित्यपुराणेऽपि,—इति मु० ।

† नास्तीदमर्द्धं मुद्रितातिरिक्तपुस्तकेषु ।

प्रयोगविधिप्रयोज्यत्वं भिन्नप्रयोगविधिप्रयोज्यत्वञ्च प्राप्तम्। तत्रश्चैका-
धिकारपूर्व्वसाधनत्वं भिन्नाधिकारपूर्व्वसाधनत्वञ्चावगम्यते*।

उपविष्टब्राह्मणनियमाः स्मृत्यन्तरे दर्शिताः,—

"पवित्रपाणयः सर्व्वे ते च मौनव्रतान्विताः।
उच्छिष्टोच्छिष्टसंस्पर्शं वर्जयन्तः परस्परम्"—इति॥

मौनित्वञ्च ब्रह्मोद्यकथाव्यतिरिक्तविषयम्। अतएव यमः,—

"ब्रह्मोद्याश्च कथाः कुर्युः पितृणामेतदीप्सितम्"—इति।

उपविष्टेष्वपि ब्राह्मणेषु यतिर्ब्रह्मचारी वा यद्यागच्छति, तदा
सोऽपि श्राद्धे भोजयितव्यः। तदाह यमः,—

"भिक्षुको ब्रह्मचारी वा भोजनार्थमुपस्थितः।
उपविष्टेष्वनुप्राप्तः काममन्नमपि भोजयेत्"—इति॥

छागलेयोऽपि,—

"पूजयेत् श्राद्धकालेऽपि यतिं च ब्रह्मचारिणम्।
विप्रानुद्धरते पापात् पितृमातृगणानपि"—इति॥

मनुरपि,—

"ब्राह्मणं भिक्षुकं वाऽपि भोजनार्थमुपस्थितम्।
ब्राह्मणैरभ्यनुज्ञातः शक्तितः प्रतिपूजयेत्"—इति॥

ब्राह्मणोपवेशनानन्तरं कर्त्तव्यं पुराणेऽभिहितम्,—

"श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरम्।
ताभ्याञ्चैव नमस्कृत्य ततः श्राद्धं प्रवर्त्तयेत्"—इति॥

---

* तत्रश्चैकाधिकाराद् पूर्व्वसाधकत्वं भिन्नाधिकाराद् पूर्व्वसाधकत्वञ्चाव-
गम्यते,—इति मो॰ ग्र॰। ॰धिकारापूर्व्वसाधनत्वमिति त्वकारार्थं प्रतिभाति।

श्राद्धं करिष्यत्स्वेकमुपविष्टान् ब्राह्मणान् पृच्छेदित्यर्थः। अत-
एवोक्तं तत्रैव,—

"उभौ हस्तौ समौ कृत्वा जानुभ्यामन्तरे स्थितौ।
सम्यगेवोपविष्टान् सर्वान् पृच्छेत् द्विजोत्तमान्"—इति॥

कुरुष्वेति तैः अनुज्ञातो देवताभ्यः पितृभ्यश्चेति मन्त्रं त्रिः पठेत्।
तदुक्तं ब्रह्माण्डपुराणे,—

"देवताभ्यः पितृभ्यश्च महायोगिभ्यएव च।
नमः स्वधायै स्वाहायै नित्यमेव नमो नमः॥
आद्येऽवसाने श्राद्धस्य त्रिरावृत्तं जपेत्सदा"—इति।

अनन्तरं सर्वतस्तिलान्विकिरेत्। तदुक्तं निगमे। "अपहता इति
तिलान्विकिरेत्"—इति। तिलान्विकीर्य दर्भासनं दद्यात्। तदुक्तं
पुराणे,—

"कुरुष्वेति च तैरुक्तो दद्याद्दर्भासनं ततः"—इति।

दर्भासनदानञ्च ब्राह्मणहस्ते उदकदानपूर्वकं कार्य्यम्। अतएव
याज्ञवल्क्यः,—

"पाणिप्रक्षालनं दत्त्वा विष्टरार्थान् कुशानपि"—इति॥

विष्टरार्थानासनार्थान् कुशानासनेषु दद्यादित्यर्थः। तदुक्तं पुराणे,—

"आसने आसनं दद्याद्वामे वा दक्षिणेऽपि वा"—इति।

वामे वा दक्षिणेऽपि वेत्ययं विकल्पः पित्र्यदैवार्थब्राह्मणासन-
दानविषयतया व्यवस्थितो द्रष्टव्यः। अतएवोक्तं तत्रैव,—

"पित्र्यकर्मणि वामे तु दैवे कर्मणि दक्षिणे"—इति।

दैवे कर्मण्यासनदाने विशेषः काठकेऽभिहितः। "देवानां यवा-

दर्भाः"—इति। आसनं दत्वा पुनर्विप्रमन्त्रयीत। तदाह संग्रहकारः।
"ततः पुनरपो दत्वा निमन्त्रयेत्। दैवे क्षणः क्रियतां, ततः ओम् तथेति विप्रो ब्रूयात्। प्राप्नोतु भवानिति कर्त्ता पुनर्ब्रूयात्, प्राप्नवानिति विप्रः पुनर्ब्रूयात्"—इति। निमन्त्रणञ्च निरङ्गुष्ठं हस्तं गृहीत्वा कर्त्तव्यम्। तदुक्तं पुराणे,—

"निरङ्गुष्ठं गृहीत्वा तु विप्रान् देवान् समाह्वयेत्"—इति।

अङ्गुष्ठव्यतिरिक्तं हस्तं गृहीत्वा निमन्त्र्य विप्रान् देवान् समाह्वयेदित्यर्थः। आवाहनेतिकर्त्तव्यतामाह यमः,—

"यवहस्तस्ततो देवान् विप्रानावाहनं प्रति।
आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा॥
विश्वेदेवाः शृणुतेति मन्त्रं जप्त्वा ततोऽक्षतान्।
ओषधयेति(१) मन्त्रेण विकिरेत्तु प्रदक्षिणम्"—इति॥

प्रदक्षिणं दक्षिणपादादिमस्तकान्तमक्षतान् विकिरेत् आरोपयेदित्यर्थः। विश्वेदेवाश्च दश दक्षस्मृत्या दर्शिताः,—

"क्रतुर्दक्षो वसुः सत्यः कालः कामस्तथैव च।
धुरिश्च रोचनश्चैव * तथा चैव पुरूरवाः॥
आर्द्रवाश्च † दशैते तु विश्वेदेवाः प्रकीर्त्तिताः"—इति॥

---

* धुरी विलोचनश्चैव,—इति मु०। धुरिश्च लोचनश्चैव,—इत्यन्यत्र पाठः।

† माद्रवाश्च,—इत्यन्यत्र पाठः।

---

(१) ओषधयेति,—इत्यत्र विसर्गलोपे सन्धिरार्षः। ओषधय इति,—इति क्वचित् पाठः।

"शिवनेत्रोद्भवं(१) यस्मादतस्तत् पितृवल्लभम् ।
अमङ्गलं तत् यत्नेन देवकार्येषु वर्जितम्"—इति ॥

अर्घ्यपवित्रकं प्रतिपात्रं भेदेन कार्यम्। तदुक्तं चतुर्विंशतिमते,—

"द्वे द्वे प्रत्येके देवानां पात्रे कृत्वा पयः क्षिपेत्" ।

पवित्रकरणेतिकर्त्तव्यतामाह याज्ञवल्क्यः,—

"पवित्रे स्थ इति मन्त्रेण द्वे पवित्रे च कारयेत् ।
अनन्तर्गर्भे कुशच्छिन्ने कौशे प्रादेशसम्मिते"—इति ॥

कुशच्छिदइति कुशमन्तरे कृत्वा छिन्ने। अतएव यज्ञपार्श्वः,—

"ओषधीमन्तरे कृत्वा अङ्गुष्ठाङ्गुलिपर्व्वणोः ।
छिन्द्यात् प्रादेशमात्रन्तु पवित्रं विष्णुरब्रवीत् ॥
न नखेन न काष्ठेन न लोष्टेन न स्पृशयात्"—इति ।

अनन्तरं, स्वाहार्घ्या इति मन्त्रेण देवतार्थं प्राङ्मुखसमीपेऽर्घ्यपात्रं स्थापयेत् । तथाच गार्ग्यः,—

"स्वाहेति चैव देवानां होमकर्मण्युदाहरेत्"—इति ।

देवानां होमकर्मण्यर्घ्यदाने कथमनुपस्थिते पात्रं स्थापयितुं स्वाहार्घ्या इति मन्त्रमुच्चारयेदिति प्रकरणादेव गम्यते । अर्घ्यपात्रं स्थापयित्वा विप्रहस्तेऽर्घ्यं दद्यात् । तदाह याज्ञवल्क्यः,—

"या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत् ।"

अर्घ्यदाने विशेषमाह गार्ग्यः,—

"दत्त्वा हस्ते पवित्रन्तु संपूज्यार्घ्यं विनिक्षिपेत्"—इति ।

---

(१) "सोऽरोदीत्, यदरोदीत् तद् रजतस्य रजतं तस्य यदश्रु अशीर्यत तद्रजतमभवत्"—इति ब्राह्मणवाक्यमनुसन्धेयम्।

पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः"—इति ॥

द्विगुणान् द्विगुणभुग्नान् सतिलान् कुशानासनार्थं दद्यात्। तदुक्तं काठके। "पितॄणां द्विगुणास्तिलैः" इति।

आसनदानात्पूर्वं पाद्यार्थोदकं दद्यात्। तथा चाश्वलायनः। "अपः प्रदाय दर्भान् द्विगुणभुग्नानासनं प्रदाय"। अपः प्रदायेति श्राद्धे अपः क्षिप्यतामिति पूर्ववत् जलं दत्वा। पितॄनावाहयिष्ये इति ब्राह्मणान् पृष्ट्वा आवाहयेति तैरनुज्ञातः उशन्तस्त्वेति मन्त्रेणावाह्य नमो वः पितर इति तिलान् मस्तकादिदक्षिणपादान्तमवकीर्य आयन्तु नः पितर इति मन्त्रेणोपतिष्ठते। तथा च प्रचेताः,—

"शिरःप्रभृति पादान्तं नमो व इति पैतृके"—इति।

उपस्थानानन्तरकृत्यमुक्तं पुराणे,—

"अपेदायान्तु नः इति मन्त्रं सम्यगुदीरयन्।
रक्षार्थं पितृसत्रस्य त्रिःकृत्वः सर्व्वतो द्विजम्
तिलांश्च प्रक्षिपेन्मन्त्रमुच्चार्यापहता इति" ॥

अर्घ्यपात्रासादनान्तं पूर्ववत् कुर्यात्। अर्घ्यपात्रासादनादौ विशेषो विष्णुना दर्शितः। "दक्षिणाग्रेषु दक्षिणापवर्गेषु चमसेषु पित्र्यपात्रत्रिकेषु शन्नोदेवीरिति"। अयमर्थः। दक्षिणाग्रेषु दर्भेषु दक्षिणापवर्गतयाऽऽसादितेषु पवित्रान्तर्हितेषु चमसेषु पित्र्यार्घ्यपात्रेषु शन्नोदेवीरभिष्टय इति मन्त्रेण प्रतिपात्रमप आसिञ्चेदिति। शौनकोऽपि। "पात्रेषु दर्भान्तर्हितेष्वपः प्रदाय शन्नोदेवीरभिष्टय इत्यनुमन्त्रितासु तिलानावपति, तिलोऽसि सोमदैवत्यो गोसवो देवनिर्मितः। प्रत्नमद्भिः प्रक्तः स्वधया पितॄनिमांल्लोकान्प्रीणयाहि नः

स्वधान्नम इति"। अत्र च पित्रादीनां प्रत्येकमेकैकस्मिन्नेकब्राह्मण-निमन्त्रणे सर्व्वेषामेकब्राह्मणनिमन्त्रणेऽपि पृथगेवार्घ्यपात्राणि न तु ब्राह्मणसंख्यया। अतएव वैशम्पायनः,—

"त्रीणां पितॄणां पृथगेव कुर्यात्पात्राणि धर्म्मवित्।
एकस्मिन्वा बहुषु वा ब्राह्मणेषु यथाविधि"॥

त्रीणां तिलानर्घोदकेषु क्षिपेदित्यर्थः। अर्घ्यपवित्रपात्रपुष्पसंख्यया कर्त्तव्यम्। तदुक्तं चतुर्विंशतिमते,—

"तिलस्तिलः शलाकाः स्युः पितृपात्रेषु पार्व्वणे"—इति।

तिलप्रक्षेपानन्तरं गन्धपुष्पाणि प्रक्षिपेत्। तदुक्तं ब्रह्मपुराणे,—

"अर्घाः पुष्पैश्च गन्धैश्च ताः सम्पूज्याश्च शास्त्रवत्"—इति।

ता अर्घपात्रस्था आपस्ता गन्धादिभिः पूज्या इत्यर्थः। अनन्तर-कर्त्तव्यमाह शौनकः,—"ताः प्रतिग्राहयिष्यन् स्वधार्घ्या इति"। ता-अपो ब्राह्मणैः प्रतिग्राहयिष्यन् स्वधार्घ्या इति मन्त्रेण स्थापयेदित्यर्थः। ततः पवित्रान्तर्हितेषूदकपूर्व्वकं या दिव्या इति मन्त्रेणार्घोदकं दद्यात्। तथाच पैठीनसिः। "ततो ब्राह्मणहस्तेषूदकपूर्व्वं दर्भान्प्रदा-योदकपूर्व्वकमर्घोदकं ददाति या दिव्या इत्युक्त्वाऽथैतन्ने अर्घो-दकमित्यप उपस्पृश्यैवमेवेतरयोः"—इति। अत्र विशेषमाह शङ्खः। "या दिव्या आप इति पात्रं पाणिभ्यामुद्धृत्य नाम गोत्रञ्चोक्त्वा पवित्रहस्तेऽर्घं दद्यात्"—इति। यत्तु पैठीनसिवचने हस्तेष्विति बहु-वचनम्, तत् त्रींस्त्रीनेकैकेति विहितब्राह्मणसङ्ख्यापेक्षम्। ब्राह्मण-हस्तेषूदकपूर्व्वं दर्भान्प्रदायेति पित्रर्थब्राह्मणार्थमपि बहुवचनप्रयो-गात्। अन्यथा, इतरयोरिति पितामहप्रपितामहार्थब्राह्मणा-

र्थमस्य पृथग्विधानं न स्यात्। (१)एवमर्घ्यं दत्त्वा तेषामर्घ्यपात्राणां संस्रवान् विप्रहस्तेभ्यः पात्रेषु गलितान् पितृपात्रे संस्थाप्य तत्पात्रं न्युब्जमधोमुखं "पितृभ्यः स्थानमसि"—इत्यधः कुर्यात् भूमौ निदध्यात् इत्यर्थः। न्युब्जकरणानन्तरकर्त्तव्यमाह बैजवापः;—

"तस्योपरि कुशान्दत्त्वा प्रदद्याद्दैवपूर्व्वकम्।
गन्धपुष्पाणि धूपञ्च दीपवस्त्रोपवीतकम्"—इति ॥

दैवपूर्व्वकमित्ययं पदार्थानुसमयो याज्ञवल्क्योक्तकाण्डानुसमयेन सह विकल्प्यते इत्यविरोधः। एवं गन्धपुष्पादिभिर्ब्राह्मणानभ्यर्च्याग्नौ करणाख्यं कर्म्म कुर्यात्। तदाह कात्यायनः;—

"गन्धान्ब्राह्मणसात्कृत्वा पुष्पाण्यृतुभवानि च।
धूपं चैवानुपूर्व्वेण अग्नौ कुर्यादतः परम्"—इति ॥

अग्नौ करणप्रकारमाह याज्ञवल्क्यः;—

"अग्नौ करिष्यन्नादाय पृच्छेदन्नं घृतप्लुतम्।
कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नौ पितृयज्ञवत् ॥
हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः।
यथालाभोपपन्नेषु रौप्येषु तु विशेषतः"—इति ॥

अग्नौ करिष्यन् घृतप्लुतमन्नमादाय "अग्नौ करिष्ये"—इति ब्राह्मणान् पृच्छेत्। घृतशब्देन माषादेर्निरासः। ततः कुरुष्वेति तैरनुज्ञातः, "साग्निकस्तूपसमाधाय* मेक्षणेनावदाय सोमाय पितृमते स्वधा-

---

* सन्निधावुपसमाधाय,—इति मु०।

---

(१) इत्याद्यर्घ्यं संस्रवांस्तेषां (१।२३४) इति याज्ञवल्क्यवचनं व्याचष्टे एव-मर्घ्यं दत्त्वेत्यादिना।

नमोऽग्नये कव्यवाहनाय स्वधानमः"—इति पिण्डपितृयज्ञविधानेनाग्नौ जुहुयात्। ततोऽग्नौकरणं हुत्वा हुतशेषं यथालाभोपपन्नेषु पित्रादि-भाजनेषु* दद्यात् न वैश्वदेवभाजनेषु। तदुक्तं पुराणे,—

"अग्नौकरणशेषन्तु न दद्याद्वैश्वदेविके"—इति।

अग्नौकरणञ्च प्राचीनावीत्युपवीती वा कुर्य्यात्। तत्प्रकृतिभूतस्य पिण्डपितृयज्ञस्य दैविकत्वपैतृकत्वाभ्यामुभयविधत्वेन विकल्पितो-भयधर्मकत्वात्, तद्विकृतिभूताग्नौकरणहोमेऽपि प्राचीनावीतित्वोप-वीतित्वयोर्विकल्पोऽवगम्यते। अत्र च यथाप्राप्तं व्यवस्था द्रष्टव्या। अग्नौकरणञ्च स्मार्त्तत्वेन विवाहाग्नौ कर्त्तव्यम्। यदा तु सर्वाधाने-नौपासनाग्निर्नास्ति, तदा दक्षिणाग्नौ जुहुयात्, तदसन्निधाने लौकि-काग्नौ। तथा च वायुपुराणम्,—

"आहृत्य दक्षिणाग्निन्तु होमार्थं वै प्रयत्नतः।
अग्न्यर्थं लौकिकं वाऽपि जुहुयात्कर्मसिद्धये"—इति।

अग्न्यर्थमौपासनाग्निकार्य्यसिद्ध्यर्थम्। दक्षिणाग्न्यसन्निधाने पाणौ होमः कर्त्तव्यः। तथा च स्मृत्यन्तरम्,—

"हस्तेऽग्नौकरणं कुर्य्यादग्नौ वा साग्निको द्विजः"—इति।

साग्निकः सर्वाधानेनाहिताग्निर्दक्षिणाग्न्यसन्निधाने हस्ते लौकि-केऽग्नौ वाऽग्नौकरणं कुर्य्यादित्यर्थः। यदा त्वर्धाधानेनाहिताग्नि-रग्निमान्† तदौपासनाग्नावग्नौकरणं कुर्य्यात्, तदभावे द्विजपाणा-वप्सु वा। तथाच मार्कण्डेयः,। "अनाहिताग्निरौपासनाग्न्यभावे

---

* पित्रादिभोजनपात्रेषु,—इति मु०।

† यदा त्वर्धाधानेनाहिताग्निरनाहिताग्निर्वाऽग्निमान्,—इति मु०।

वृद्धिश्राद्धमभ्युदय इति पदेनोक्तम्। अष्टकाख्यश्राद्धमष्टम्यामिति पदेनोक्तम्। एकोद्दिष्टपदेन सपिण्डीकरणं लक्षयोक्तं, सपिण्डीकरणे एकोद्दिष्टस्यापि सद्भावात्। एषां मध्ये आद्येषु चतुर्षु साग्निकानामग्नावेवाग्नौकरणहोमः, इतरेषु साग्नीनां पिण्डब्राह्मणहस्तएवेति*। पाणौ होमे तु विशेषः कात्यायनेन दर्शितः,—

"पिण्डे यः पङ्क्तिमूर्द्धन्यस्तस्य पाणावनग्निकः।
हुत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निक्षिपेत्"—इति।

यत्तु यमेनोक्तम्,—

"दैवविप्रकरेऽनग्निः कृत्वाऽग्नौकरणं द्विजः"—इति।

तत्र विकल्पेन व्यवस्था द्रष्टव्या। दैविकब्राह्मणपाणौ होमपक्षेऽपि पित्र्यब्राह्मणपात्रेष्वेव शेषं निक्षिपेत्। अतएव वायुपुराणम्,—

"हुत्वा दैवकरेऽनग्निः शेषं पित्र्ये निवेदयेत्।
न हि स्मृताः शेषभाजो विश्वेदेवाः पुराणगैः"—इति।

पाणौ होमे अनुज्ञाप्रकारं तदाह शौनकः। "अनग्निश्चेदाज्यं गृहीत्वा अवत्स्वेवाग्नौकरणम्—इति पूर्ववत्तथाऽस्त्विति"। अयमर्थः। आज्यं घृतयुतमन्नं गृहीत्वा "अवत्स्वेवाग्नौकरणहोमं करिष्ये"—इति पूर्ववत् पृष्ट्वा तथाऽस्त्विति तैरनुज्ञातो जुहुयात्,—इति। यमोऽपि,—

"अग्नौकरणवत्तत्र होमो दैवकरे भवेत्।
पर्य्यस्तदर्भानास्तीर्य्य यतो ह्यग्निसमो हि सः"—इति।

पर्य्यस्तदर्भाः परिस्तरणयोग्यदर्भाः। दैवकरग्रहणेन पित्र्यब्राह्मण-

---

* होमश्चाग्निद्वयोरित्यारभ्य एतदन्तोग्रन्थो नास्ति मा॰ पुस्तके।

करेऽप्युपलक्ष्यते। उभयथापि विकल्पेनाग्नौकरणस्य विधानात्। पाणितले हुतस्यान्नस्य विनियोगमाह गृह्यपरिशिष्टकारः,—

"यच्च पाणितले दत्तं यच्चान्यदुपकल्पितम्।
एकीभावेन भोक्तव्यं पृथग्भावो न विद्यते॥
अन्नं पाणितले दत्तं पूर्वमश्नन्त्यबुद्धयः।
पितरस्तेन तृप्यन्ति शेषान्नं न लभन्ति ते"—इति।

यदा दैवविप्रकरे होमस्तदा पितृमातामहश्राद्धद्वयार्थं सकृदेवानुष्ठेयः। वैश्वदेवभेदेऽपि तथाधिकरणकारकस्य संप्रतिपन्नत्वात्। यदा पित्र्यब्राह्मणकरे होमस्तदा मातामहब्राह्मणकरेऽपि पृथगनुष्ठेयः, वैश्वदेविकतन्त्रत्वेऽपि तथाधिकरणकारकस्यासंप्रतिपन्नत्वात्[1]।

तथा च कात्यायनः,—

---

(१) दैवब्राह्मणहस्ते होमविधानपक्षे दैवब्राह्मणहस्त एवाग्नौकरणहोमस्याधार इति स एव तस्याधिकरणकारकं, आधारस्यैवाधिकरणकारकतया स्मरणात्। वैश्वदेवभेदेऽपि एकस्मिन् वैश्वदेवब्राह्मणहस्ते अग्नौकरणहोमे कृतेऽपि प्राक्प्रोक्त एवाधारे स कृतो भवतीति नास्य पुनरावृत्तिः। पित्र्यब्राह्मणहस्ते होमपक्षे हि पितृब्राह्मणहस्त एव होमस्याधिकरणकारकं भवति। मातामहपक्षे तु न पितृब्राह्मणो वर्त्तते किन्त्वन्य एव। पित्र्यब्राह्मणहस्ते होमविधिस्तु पितृपक्ष एव प्रवर्त्तते। तस्य च 'मातामहानामप्येवं'—इत्यातिदेशिकत्वान्मातामहपक्षे प्राप्तिः। एवञ्च पितृब्राह्मणस्थाने मातामहब्राह्मणवत् पितृब्राह्मणहस्तस्थाने मातामहब्राह्मणहस्तोऽपि तत्कर्त्तव्याग्नौकरणहोमाधारतया अतिदेशेन प्राप्यते इति व्यक्तमधिकरणकारकस्य भिन्नत्वम्। तथाचाधिकरणकारकभेदात् होमोऽपि भेदेनैव कर्त्तव्य इति भावः।

"मातामहस्य भेदेऽपि कुर्य्यात्तन्त्रे च* साग्निकः"—इति ।

वैश्वदेविकस्य भेदे तन्त्रे च मातामहस्य मातामहार्थमाद्य-स्यापि पात्रे होमं साग्निकः कुर्य्यादित्यर्थः । पात्राणि द्विः प्रक्षा-लयेत् । तथा च ब्रह्माण्डपुराणम्,—

"प्रक्षाल्य हस्तपात्रादि पश्चादद्भिर्विधानतः ।
प्रक्षालनं जलं दर्भैस्तिलमिश्रं क्षिपेत्कुशौ"—इति ।

हस्तेन निर्द्दिष्टं पात्रादीति मध्यमपदलोपी समासः । आदि-शब्देन स्थाल्यादिधारणार्थं गृह्यते । एवं प्रक्षालितेषु पात्रेषु अन्नमेवं प्राचीनावीती पितृपात्रेषु निधाय दध्यादिकान् पदार्थान् परिवेषयेत् । तथा च शौनकः,—

"अन्नाग्नौ परिशिष्टन्तु पितृपात्रेष्वनन्तरम् ।
निवेश्यैवापसव्येन परिवेषणमाचरेत्"—इति ।

अपसव्येनेति अन्नशेषनिवेदनेनान्वेति न परिवेषणेन । अतएव कार्ष्णाजिनिः,—

"अपसव्येन कर्त्तव्यं पित्र्यं कृत्यं विशेषतः ।
अन्नदानादृते सर्व्वमेवं मातामहेष्वपि"—इति ।

परिवेषणप्रकारो मनुना दर्शितः,—

"पाणिभ्यान्तूपसंगृह्य स्वयमन्नस्य वर्द्धितम् ।
विप्रान्तिके पितॄन् ध्यायन् शनकैरुपनिक्षिपेत्"—इति ।

अन्नस्य वर्द्धितमन्नेन पूर्णं परिवेषणपात्रं विप्रान्तिके भोजनार्थं-

---

* कुर्य्याच्चैव,—इति पा० ह० ।

पाके । स्वयमिति वचनात् स्वयं परिवेषणं मुख्यम् । अतएव वायु-पुराणम्,—

“[illegible] भोक्ता स्वयं तु परिवेषणात्”—इति ।

यत्तु तत्रैवोक्तम्,—

“परिवेषणं प्रशस्तं हि भार्यया पितृकर्मणि ।
पितृदेवमनुष्याणां स्त्रीवशायोयतः स्मृतः”—इति ।

तदितरापेक्षया वेदितव्यम् । भार्य्ययाऽपि सवर्णयैव परिवेषणं कार्य्यम् । तथा च नारायणः,—

“यद्भक्ष्यं यत्पवित्रञ्च यत्पिष्टं यत्सुखावहम् ।
द्विजातिभ्यः सवर्णाया हस्तेनैव तु दीयते”—इति ।

हस्तेन हस्तद्वयेनेत्यर्थः । हस्तेनापि न साक्षाद् देयं, अपि तु दर्व्यादिद्वारा । अतएव शङ्खशातातपः,—

“उभाभ्यामपि हस्ताभ्यामाहृत्य परिवेषयेत्”—इति ।

मत्स्येनोक्तम्*,—

“हस्तदत्तास्तु ये स्नेहा लवणव्यञ्जनादयः ।
दातारं नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्बिषम्”—इति ।

विष्णुपुराणेऽपि,—

“नापविद्धेन हस्तेन नैकेन न विना कुशम् ।
नायसेनैव पात्रेण श्राद्धेषु परिवेषयेत्”—इति ।

आयसेन लोहमयपात्रेण नैव परिवेषयेत् । परिवेषणे कानि

---

* इदम्,—इत्यादि इत्यन्तोऽंशो नास्ति मा० पुस्तके ।

पात्राणि प्रशस्तानीत्यपेक्षिते विष्णुः। "घृतादिदाने तैजसानि पात्राणि वा फल्गुपात्राणि वा प्रशस्तानि। अत्र च पितृगाथा भवति,—

सौवर्णराजताभ्याञ्च खड्गेनौडुम्बरेण च।

दत्तमक्षततां याति फल्गुपात्रेण वाऽप्यथ"—इति।

खड्गेन खड्गमृगशृङ्गकृतदर्व्यादिना। फल्गुपात्रेण काकोडुम्बरिकाश्मन्तकदारुकृतदर्व्यादिना*। अन्नान्यपि परिवेषणीयान्याह मनुः,—

"भक्ष्यं भोज्यञ्च विविधं मूलानि च फलानि च।

हृद्यानि चैव मांसानि पानानि सुरभीणि च॥

उपनीय तु तत्सर्वं शनकैः सुसमाहितः।

परिवेषयेत प्रयतः गुणान् सर्व्वान् प्रचोदयन्"—इति।

शौनकोऽपि,—

"शाकं सर्व्वमुपानीय निवेद्य च पृथक् पृथक्।

विधिना दैवपूर्व्वं तु परिवेषणमारभेत्"—इति।

सम्पादितं सर्व्वपात्रेषु प्रक्षिप्य पात्राभिमन्त्रणं कुर्य्यात्। तदाह प्रचेताः। "सर्व्वं प्रकृतं दत्वा पात्रमालभ्य जपेत्"—इति। अत्र विशेषमाह याज्ञवल्क्यः,—

"दत्वाऽन्नं पृथिवीपात्रमिति पात्राभिमन्त्रणम्।

कृत्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत्"—इति।

अनन्तरकर्त्तव्यमाहात्रिः,—

"सव्येन शुक्लमन्नाद्यमिदमन्नमितीरयेत्।

स्वदितेति च ततः कुर्य्यात् स्वस्त्यादिं निवर्त्तयेत्॥

---

* खड्गेन,—इत्यादि दर्व्यन्तं नास्ति आ० शा० स० पुस्तकेषु।

गोत्रसंबन्धनामानि इदमन्नं ततः स्वधा ।

पितॄन् क्रमादुदीर्य्येति स्वत्वं विनिवर्त्तयेत्"—इति ।

अयमर्थः । विश्वेभ्यो देवेभ्य इति देवतोद्देशेन मन्त्रोच्चारणानन्तरमिदमन्नमित्युच्चारयेत्, ततः स्वाहेति मन्त्रमुच्चारयेत्, ततो न ममेति स्वत्वपरित्यागं कुर्य्यात् । ततः पित्रादिक्रमात् संबन्धगोत्रनामोच्चारणपूर्व्वकं* देवतोद्देशं कृत्वेदमन्नमिति प्रदेयं द्रव्यं निर्दिश्य, स्वधेति स्वधादानप्रकाशकं मन्त्रमुच्चार्य्य, न ममेति स्वत्वपरित्यागं कुर्य्यात् । अनन्तरकृत्यमाह लघुयमः,—

"अन्नहीनं क्रियाहीनं मन्त्रहीनञ्च यद्भवेत् ।

सर्व्वमच्छिद्रमित्युक्त्वा ततो यत्नेन भोजयेत्"—इति ।

अच्छिद्रं जायतामित्युक्त्वा । अनन्तरकर्त्तव्यमाह प्रचेताः,—

"अपोशानं प्रदायाथ सावित्रीं त्रिर्जपेदथ ।

मधुवाता इति तृचं(१) मध्वित्येतत्त्रिकं तथा"—इति ।

मधु इत्येतत् त्रिरावर्त्तनीयमिति चतुर्थपादस्यार्थः । सावित्रीं सव्याहृतिकां जपेत् । तथा च याज्ञवल्क्यः,—

"सव्याहृतिकां गायत्रीं मधुवाता इति तृचम् ।

जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः"—इति ।

यथासुखमित्यत्र जुषध्वमित्यध्याहारः । अतएव व्यासः,—

---

* सम्बन्धनामगोत्रोच्चारणपूर्व्वकं,—इति मु० ।

---

(१) तृचं,—इत्यार्षोऽयं प्रयोगः । "ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि"—इति पाणिनिस्मरणात् ।

अपेक्षितं याचितव्यं श्राद्धार्थमुपकल्पितम् ।

न याचते द्विजो मूढः स भवेत् पितृघातकः"—इति ।

यत्तु,

"याचते यदि दातारं ब्राह्मणो ज्ञानदुर्बलः ।

पितरस्तस्य तुष्यन्ति दातुर्भीतुर्न संशयः"—इति ।

"उच्छ्रूदादपरावेव तुष्यतेऽकर्मवत्सलः ।

तस्मादिहात्मनैव दद्याच्च याचेन्न दापयेत्"—इति

वायुपुराणवचनौ विरुध्येयातामिति चेत् । नैवम् । तयोरनुपकल्पितविषयत्वेनाप्युपपत्तेः । उपकल्पितवस्तुनोऽप्यत्यन्ताधिक्ये दानप्रतिपत्ती ब्रह्मलिखिताभ्यां निषिद्धौ । "नात्यन्ताधिकं दद्यान्न प्रतिगृह्णीयात्"—इति । अनपेक्षितवस्तुनो निवारणप्रकारमाह निगमः,—

"अन्नपानादिकं श्राद्धे वारयेन्न बुधः क्वचित् ।

अनिष्टमाह्रियमाणं वा वारयेद्धस्तसंज्ञया"—इति ।

वारणं वाचनवाप्युपलक्षणार्थम् । भुञ्जानोपायने मौनभङ्गविरोधात् । अपेक्षितवस्तु ददामीत्युक्ता न देयम् । तथाच यमः,—

"यावदुष्णं भवति यावदिष्टं प्रदीयते ।

तावदश्नन्ति पितरो यावन्नाह ददाम्यहम्"—इति ।

भोजनकाले दाननियमाः ब्रह्माण्डपुराणे दर्शिताः,—

"न चाश्रु पातयेत् कर्त्ता* शुक्तां गिरमीरयेत् ।

* जातु,—इति मु० ।

न चोदयेत भुञ्जानान् न च कुर्वीत मत्सरम् ।

न दीनो नापि वा क्रुद्धो न चैवान्यमना नरः ।

एकाग्रमाधाय मनः श्राद्धं कुर्यात्सदा बुधः”—इति ।

भोक्तृनियमनाच सुमन्तुः,—

“अक्रोधनो रसान् सम्यगाचमन* रोचते ।

यो हस्तैर्भोजनन्तेषां आसतो† नावलेहनम्”—इति ।

निगमेऽपि । “तूष्णीं भुञ्जीरन् न विलोकयमाना प्रकृत्य‡ पापम्”—इति । बोधायनोऽपि,—

“पादेन पादमाक्रम्य योऽश्नुते यद्यपि द्विजः ।

नैवासौ भुञ्जते श्राद्धे निराशाः पितरोगताः”—इति ।

प्रचेता अपि,—

“पीत्वाऽपोशानमश्नीयात् पात्रे दत्तमगर्हितम् ।

सर्वेन्द्रियाणां चापल्यं न कुर्यात्पाणिपादयोः”—इति ।

मनुरपि,—

“अत्युष्णं सर्वमन्नं स्याद्भुञ्जीरंश्चैव वाग्यताः ।

न च द्विजातयो ब्रूयुर्दात्रा पृष्टा हविर्गुणान्”—इति ।

भुञ्जीरंश्चैवेत्येवकारः प्रमादात्परस्परसंस्पर्शेऽपि भोजनानिवृत्त्यर्थः ।

अतएव ब्रह्मा,—

---

* सम्यगाचमनादपि,—इति मु० ।

† अश्नतो,—इति पा० ।

‡ अविलोकयन्तोऽन्नेनाकृत,—इति मु० ।

"आहूपंक्तौ तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत्।
तदन्नमत्यजन् भुक्ता गायत्र्यष्टशतं जपेत्"—इति।

पुनः स एव,—

"ग्रहारेणापि योऽश्नीयाद्भुञ्जानोऽपि गुणान्वदेत्।
भक्तभाजोद्धरेत्पात्रं मुञ्चेद्धस्तेन वाऽपि तत्।
प्रौढपादो बहिःकक्षो बहिर्जानुकरोऽथवा।
अङ्गुष्ठेन विनाऽश्नाति मुखशब्देन वा पुनः।
पीतावशिष्टतोयादि पुनरुद्धृत्य वा पिबेत्।
खादितार्द्धं पुनः खादेन्मोदकानि फलानि वा।
मुखेन वा धमेदन्नं निष्ठीवेद्भाजनेऽपि वा।
इत्थमश्नन् द्विजः श्राद्धं हत्वा गच्छत्यधोगतिम्"—इति।

प्रौढपादः आसनारूढपादः। बहिःकक्षः उत्तरवासो बहिर्भूत-कक्षदेशः*। दातृनियममाह मनुः,—

"श्राद्धे नियुक्तान् भुञ्जानान् पृच्छेल्लवणादिषु।
उच्छिष्टाः पितरो यान्ति पृच्छतो नात्र संशयः।
दातुः पतति वाऽऊर्वे जिह्वा भोक्तुश्च भिद्यते"—इति।

अन्यानपि भोक्तृनियमानाह प्रचेताः,—

"न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन।
न पादौ न शिरो बस्तिं न पदा भाजनं स्पृशेत्।
भोजनन्तु न निःशेषं कुर्यात् प्राज्ञः कथञ्चन।

---

* प्रौढपादः,—इत्यादिरेतदन्तोग्रन्थोनास्ति मा० पुस्तके।

अनन्तरं गण्डूषार्थमुदकं दद्यात् । तथाच महाभारतवचनम्,—

"ततश्चाचमनार्थाय दद्यादापः सकृत्सकृत्"—इति ।

पिण्डब्राह्मणपूर्वकं सकृत्प्रथममाचमनार्थमुदकं दद्यात् । तदाह विष्णुः । "उदङ्मुखेभ्य आचमनमादौ दद्यात् ततः ब्राह्मणेषु ततस्तु प्रोक्षणम्"—इति । श्राद्धदेशं सम्प्रोक्ष्य दर्भपाणिः सर्वं कुर्यात्* । ततः पिण्डनिर्वपणं कुर्यात् । तदाह याज्ञवल्क्यः,—

"सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ।
उच्छिष्टसन्निधौ पिण्डान् दद्यात्तु पितृयज्ञवत्"—इति ।

अयमर्थः । अग्न्यर्थमुपकल्पितमिमं सर्वमन्नमुपादाय पिण्डान् ब्राह्मणोच्छिष्टसन्निधौ पितृयज्ञकल्पेन पिण्डान् दद्यात् । एतच्च अग्न्य-भावे वेदितव्यम् । यदा तु यजमानसद्भावस्तदाऽग्नौकरणशिष्ट-चरुशेषेण सह सर्वमन्नमादाय अग्निसन्निधौ पिण्डान् दद्यात् । तदाह मनुः,—

"त्रींस्तु तस्माद्धविःशेषात् पिण्डान् कृत्वा समाहितः ।
औदकेनैव विधिना निर्वपेद्दक्षिणामुखः"—इति ।

उच्छिष्टसन्निधिस्वरूपमाहात्रिः,—

"पितृणामासनस्थानादरत्निष्वरमितु ।

---

* तदनन्तरं 'पैतृकब्राह्मणेषु प्रथमं सकृत्प्रक्षालनपूर्वकमाचमनार्थमुदकं दत्त्वा पश्चाद्वैश्वदेविकब्राह्मणेषु दद्यात्ऽनन्तरं प्रोक्षितमिति मन्त्रेण श्राद्धदेशं संप्रोक्ष्य दर्भपाणिः सर्वमुपरिकर्मजातं कुर्यादित्यर्थः'—इत्यधिकः पाठः मु० ।

उच्छिष्टसन्निधानन्तु नोच्छिष्टासनसन्निधौ"—इति।

पिण्डदानमिति उच्छिष्टसंसर्गरहिताग्रदेशोपलक्षणार्थम्। अतएव व्यासः,—

"अरत्निमात्रमुत्सृज्य पिण्डांस्तत्र प्रदापयेत्।

यत्रोपसृप्तता श्वाऽपि प्राप्नुवन्ति न विप्रुषः"—इति।

पिण्डदाने कालमाह मनुः,—

"पिण्डनिर्वपणं केचित् पुरस्तादेव कुर्वते"—इति।

भोजनात् पुरस्तादर्चनानन्तरमग्नौकरणानन्तरं वा पिण्डनिर्वपणं केचिदिच्छन्ति। अपरे तु भोजनानन्तरमाचमनादर्वागूर्द्धं वा ब्राह्मणविसर्जनात् पश्चाद्वा पिण्डनिर्वपणं कश्चिदिच्छन्तीति, केचिद्-त्यनेनावगम्यते। भोजनात् पुरस्तात् पिण्डनिर्वपणं सपिण्डीकरणात् प्राग्विहितेष्वप्रशस्तेषु श्राद्धेषु, सपिण्डीकरणादिप्रशस्तश्राद्धेषु पश्चादेव पिण्डनिर्वपणम्। तदाह लोकाक्षिः,—

"अप्रशस्तेषु श्राद्धेषु पूर्वं पिण्डावनेजनम्।

भोजनस्य, प्रशस्ते तु पश्चादेवोपकल्पयेत्"—इति।

आचमनात् प्रागूर्ध्वं वा ब्राह्मणविसर्जनादूर्ध्वं वा पिण्डनिर्वपणमिति पक्षाः शाखाभेदेन व्यवस्थिताः। तथाच स्मृत्यन्तरम्,—

"मुनिभिर्भिन्नकालेषु पिण्डदानन्तु यत् स्मृतम्।

तत् स्वशाखागतं यत्र तत्र कुर्याद्विचक्षणः"—इति।

तथाश्वलायनप्रोक्तिमाचमनात् प्रागूर्ध्वं वेति पक्षयोः स्वमतेन विकल्पः। तथाचाश्वलायनः। "भुञ्जानेष्वनाचान्तेषु पिण्डान् निद-ध्यादाचान्तेषु वा"—इति। अन्यां शाखायां कालविशेषेण मनुः, तत्र

ये च मामत्रेति मन्त्रेण पिण्डदानं कुर्यादित्यर्थः। पिण्डदानं च सव्यं आचम्य* कर्त्तव्यम्। तदुक्तं वायुपुराणे,—

"मधुसर्पिस्तिलयुतांस्त्रीन् पिण्डान्निर्वपेद्बुधः।
जानु कृत्वा तथा सव्यं भूमौ पितृपरायणः"—इति॥

पिण्डदानानन्तरकर्त्तव्यमाह मनुः,—

"न्युप्य पिण्डान् पितृभ्यस्तान् प्रयतो विधिपूर्वकम्।
तेषु दर्भेषु तं हस्तं निमृज्याल्लेपभागिनाम्"—इति॥

तत्र मन्त्रो विष्णुना दर्शितः। "अत्र पितरो मादयध्वमिति दर्भमूलेषु करावघर्षणम्"—इति। तदनन्तरकर्त्तव्यमाह कात्यायनः। "अत्र पितर इत्युक्त्वोदङ्मुख आतमनादासित्वामीमदन्त पितर इति जपति"—इति। आतमनात् प्राणायामोत्थवायुपीडावधि उदङ्मुख आसीत, ततोऽभिमुखेनैव पर्यावृत्यामीमदन्तेति मनसा अपिलोच्चयेत्। अत्र विशेषः कर्मप्रदीपे दर्शितः,—

"वामेनावर्त्तनं केचिदुदगन्तं प्रचक्षते।
आवृत्य प्राणमायम्य पितॄन्ध्यायन्यथार्हतः॥
अपसव्येन चावृत्य ततः प्राणान् प्रमोचयेत्"—इति।

अमी मदन्तेत्यनुमन्त्रणानन्तरं विष्णुः। "अमीमदन्तेत्यनुमन्त्र्य शेषावघ्राणं कृत्वा शुन्धन्तां पितर इति पूर्ववदुदकनिनयनं पिण्डोपरि, ततोऽभ्यङ्क्ष्वेत्यभ्यञ्जनं दद्यादाङ्क्ष्वेत्यञ्जनं, अथ वसनाभावे

---

* आचम्य,—इति मु० पुस्तके पाठः।

† ततस्तांस्तु,—इति मु० पुस्तके पाठः।

दद्यामूर्जं वा एतद्वः पितरो वासो मातोऽन्यत् प्रेत्य* पितरो युयुग्ध्वम्"—इति। तदनन्तरं व्याघ्रः,—

"गन्धपुष्पाणि धूपञ्च दीपञ्च विनिवेदयेत्।
एतद्वः पितरो वासो दद्यान्दत्वा पृथक् पृथक्"—इति॥

अर्चनानन्तरं मत्स्यः,—

"यत् किञ्चित्पच्यते गेहे भक्ष्यं भोज्यमगर्हितम्।
अनिवेद्य न भोक्तव्यं पिण्डमूले कथञ्चन"—इति॥

तदनन्तरं बृहस्पतिः,—

"अनभ्यर्च्योदपात्रं तु तेषामुपरि निक्षिपेत्"—इति।

अनन्तरं विष्णुः। "अथैतानुपतिष्ठेत नमो वः पितर इत्यादिना मनोन्वाहुवामह इति ह्यनेनाथैतान् पिण्डांश्चालयेत् परेतन पितर इति"। अनन्तरकृत्यमाहाश्वलायनः। "अग्निं प्रत्येयाद्गृह्यं तमधाय्य सोमैरिति अग्निमग्नौकरणाग्निं गार्हपत्यं यदन्तरिक्षं पृथिवीम्"—इति। अनन्तरकृत्यमाह मत्स्यः,—

"अपावान्तेषु चाचम्य वारि दद्यात् सकृत् सकृत्"—इति।

ब्राह्मणहस्तेषु सकृत्सकृदपो दद्यादित्यर्थः। एतदाचमनात् प्राक् पिण्डदानपक्षे वेदितव्यम्। आचान्तेषु तु पिण्डदानपक्षे आचम्य पिण्डदानं कृत्वा ब्राह्मणहस्तेषूदकं सकृत् सकृद्दद्यात्, कुशाश्च देयाः। पद्मपुराणेऽपि,—

"आचान्तेषूदकं दद्यात् पुष्पाणि चाक्षतानि च"—इति।

अत्र अक्षय्यं तिलोपलक्षणार्थं, च शब्दः पुनरप्युदकदानसमुच-

* रोमाशुमतोऽन्यत्,—इति मु० पुस्तके पाठः।

चार्थः । तत्कार्यत्वेन तेषु च यवादिषु कुत्रचित् शुचौ देशे विसृष्टेषु पुनरुदकादिकं दद्यात् । तथा च मनुः,—

"आचान्तेषु पुनर्दद्यात् जलपुष्पाक्षतोदकम्"—इति ।

अनन्तरकर्त्तव्यमाह स एव,—

"दत्त्वाऽऽशीः प्रतिगृह्णीयात् द्विजेभ्यः प्राङ्मुखो बुधः ।
अघोराः पितरः सन्तु सन्त्वित्युक्ते पुनर्द्विजैः ॥
गोत्रं तथा वर्द्धतां नस्तथेत्युक्तश्च तैः पुनः ।
दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च ॥
श्रद्धा च नो मा व्यगमद्बहु देयञ्च नोऽस्त्विति ।
एताः सत्याशिषः सन्तु सन्त्वित्युक्तश्च तैः पुनः"—इति ॥

अनन्तरं पात्रचालनं कृत्वा स्वस्तिवाचनं कुर्यात् । अतएव नारायणः,—

"अप्रक्षालयित्वा तत्पात्रं स्वस्ति कुर्वन्ति ये द्विजाः ।
निराशाः पितरस्तेषां शप्त्वा यान्ति यथागतम्"—इति ॥

पात्रचालने विशेषमाह जातूकर्ण्यः,—

"पात्राणि चालयेत् श्राद्धे स्वयं शिष्योऽथवा सुतः ।
न स्त्रीभिर्न च बालेन नासजात्या कदाचन"—इति ॥

स्वस्तिवाचनप्रकारमाह पारस्करः । "स्वस्तीति भगवन् ब्रूहीति वाचनम्"—इति । यज्ञोपवीती वैश्वदेविकस्थले उदकं दत्त्वा पुरूरवार्द्रवसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यः स्वस्तीति भगवन् ब्रूहीति कर्त्ता ब्रूयात् । विप्रैश्च स्वस्तीति वक्तव्यम् । पितृमातामहस्थलेष्वप्येवमेव* ।

---

* यज्ञोपवीती,—इत्यारभ्य एतदन्तोग्रन्थो नास्ति आ० पुस्तके ।

अनन्तरकृत्यमाह याज्ञवल्क्यः। "ततः कुर्य्यादक्षय्योदकमेव च"—इति। अक्षय्यमस्त्विति ब्राह्मणहस्ते जलं दद्यादित्यर्थः। मार्कण्डेयोऽपि,—

"पितॄणां नामगोत्रेण जलं देयमनन्तरम्।
ब्राह्मणानां द्विजैर्वाच्यमक्षय्यमिदमस्त्विति"—इति॥

एतेभ्यस्त्वध्याहृत्य योजना। अनन्तरं दक्षिणां दद्यात्। मनुः,—

"स्वस्तिवाचनकं कुर्य्यात् अक्षय्योदकमेव च।
सतिलं* नामगोत्रेण दद्याच्छक्त्या च दक्षिणाम्॥
गोभूहिरण्यवासांसि भव्यानि† शयनानि च।
दद्याद्यदिष्टं विप्राणामात्मनः पितुरेव च।
वित्तशाठ्येन रहितः पितृभ्यः प्रीतिमाचरन्"—इति॥

अत्र विशेषमाह पारस्करः। "हिरण्यं विश्वेभ्यो देवेभ्यो रजतं पितृभ्यः अन्यच्च गोकृष्णाजिनं यावच्छक्यं दद्यात्‡।

एकपङ्क्त्युपविष्टानां विप्राणां श्राद्धकर्म्मणि।
भक्ष्यं भोज्यं समं देयं दक्षिणा त्वनुसारतः"—इति॥

अनुसारत इति, निमन्त्रितब्राह्मणविद्यागुणतारतम्येनेत्यर्थः। पित्रुद्देशेन दक्षिणादानं प्राचीनावीतिना कार्य्यम्। अतएव जमदग्निः। "अपसव्यन्तु तथापि मन्त्रो भगवान् हि मे मतः"—इति। तथापि दक्षिणादानेऽपीति। यत्तु तेनैवोक्तम्,—

---

* अर्चितं,—इति मा० स० पुस्तकयोः
† नव्यानि,—इति मु० पुस्तके।
‡ यावच्छक्नुयात्,—इति मा० पुस्तके।

"सर्वं कर्मापसव्येन दक्षिणादानवर्जितम्"—इति।

तद्ब्राह्मणोद्देशेन दक्षिणादानपक्षे द्रष्टव्यम्। स च पक्षो देवलेन दर्शितः,—

"आचान्तेभ्यो द्विजेभ्यस्तु प्रयच्छेदेव दक्षिणाम्"—इति॥

ब्राह्मणोद्देशेन दक्षिणादाने क्रममाह स एव,—

"दक्षिणां पितृविप्रेभ्यो दद्यात् पूर्वं ततो द्वयोः"—इति।

वैश्वदेविकब्राह्मणयोरित्यर्थः। अत्र पितृविप्रेभ्य इति समभिव्याहाराच्चतुर्थ्यर्थे षष्ठी(१)। अनन्तरं याज्ञवल्क्यः,—

"दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत्।
वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः स्वधोच्यताम्॥
ब्रूयुरस्तु स्वधेत्युक्ते भूमौ सिञ्चेत्ततो जलम्।
विश्वेदेवाश्च प्रीयन्तां विप्रैश्चोक्त इदं जपेत्॥
दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च।
श्रद्धा च नो मा व्यगमद्बहु देयञ्च नोऽस्त्विति॥
इत्युक्त्वोक्त्वा प्रिया वाचः प्रणिपत्य प्रसादयेत्।
वाजे वाजे इति प्रीतः पितृपूर्वं विसर्जयेत्"—इति॥

अनन्तरं पुत्रार्थी मध्यमपिण्डं पत्न्यै दद्यात्। तथा च वायुपुराणे,—

"पत्न्यै प्रजार्थी दद्यात्तु मध्यमं मन्त्रपूर्वकम्"—इति।

मध्यमं पिण्डमित्यर्थः। तत्प्रकारः। तत्र प्राचीनावीती, "अपां

(१) पितृविप्रेभ्य इत्यत्र चतुर्थीनिर्देशात् तत्समभिव्याहारात् द्वयोरित्यत्र षष्ठ्यपि चतुर्थ्यर्थपरेति भावः। पितृविप्रेभ्य इत्यत्र पितृभ्य इति पाठस्तु प्रामादिक एव।

ओषधीनामहं रसं प्राशयामि भूतानां गर्भं धत्स्व"—इति पत्न्या-
यज्ञवती मध्यमपिण्डं प्रयच्छेत्। तत्रायं* मन्त्रस्तु मात्स्येन दर्शितः,—

"आधत्त पितरो गर्भमत्र सन्तानवर्द्धनम्"—इति।

मनुरपि,—

"पतिव्रता धर्मपत्नी पितृपूजनतत्परा।
मध्यमन्तु ततः पिण्डमद्यात् सम्यक् सुतार्थिनी॥
आयुष्मन्तं सुतं विन्देत् यशोमेधासमन्वितम्॥
धनवन्तं प्रजावन्तं धार्मिकं सात्त्विकं तथा"—इति।

पिण्डप्रदानस्यापवादमाह स एव,—

"अप्राप्तयौवने वृद्धे सगर्भे रोगसंयुते।
बालपुत्रवत्येऽपि न दद्यात् पिण्डमङ्गना"—इति।

पत्न्या अपविधानादौ पिण्डानां प्रतिपत्त्यन्तरमाह बृहस्पतिः,—

"अन्यदेशगता पत्नी गर्भिणी रोगिणी तथा।
तदा तं जीर्णवृषभः छागो वा भोक्तुमर्हति"—इति॥

आपस्तम्बोऽपि प्रतिपत्त्यन्तरमाह,—

"यदि पत्नी विदेशस्था उच्छिष्टा यदि वा मृता।
दुराचारा नानुकूला च तदा पिण्डस्य का गतिः॥
आकाशं गमयेत् पिण्डं जलस्थो दक्षिणामुखः।
पितृणां स्थानमाकाशं दक्षिणा दिक् तथैव च"—इति॥

यत्तु देवलेनोक्तम्,—

---

* तत्रायम् इत्यादिः इत्यन्तो ग्रन्थो नास्ति मुद्रितातिरिक्तपुस्तकेषु।

† पिण्डप्रदानस्येत्यारभ्य इत्यन्तो ग्रन्थो नास्ति मुद्रितातिरिक्तपुस्तकेषु।

"ततः कर्मणि निर्वृत्ते तान् पिण्डांस्तदनन्तरम् ।
ब्राह्मणोऽग्निरजो गौर्वा भक्षयेदप्सु वा क्षिपेत्"—इति ॥

तत्पुत्रार्थित्वाभावविषयम्। तीर्थश्राद्धे पिण्डानामप्स्वेव प्रक्षेपः। तदुक्तं विष्णुधर्मोत्तरे,—

"तीर्थश्राद्धे यदा पिण्डान् क्षिपेत्तोये समाहितः ।
दक्षिणाभिमुखो भूत्वा पित्र्या दिक् सा प्रकीर्त्तिता"—इति ॥

अनन्तरमुच्छिष्टं समार्जयेत् । अतएव याज्ञवल्क्यः,—

"तत्रैव वसु विप्रेषु द्विजोच्छिष्टं न मार्जयेत्"—इति ।

अयमर्थः। विप्रविसर्जनात् प्रागुच्छिष्टं न मार्जयेदपि तु तेषु विसर्जितेषु पिण्डप्रतिपत्तौ च कृतायामिति। यत्तु व्यासेनोक्तम्,—

"उच्छिष्टं न प्रमृज्यात्तु यावन्नास्तमितो रविः"—इति ।

यच्च वसिष्ठेनोक्तम्,—

"श्राद्धे नोद्वासनीयानि उच्छिष्टान्यादिनक्षयात्* ।
श्च्योतन्ते वै स्वधाकारास्ताः पिबन्तः कृतोदकाः"—इति ॥

तद्देशान्तरश्रवणविषयम् । अतएव प्रचेताः,—

"ब्रह्मवर्चस्वतो भुङ्क्ते कश्यपेयं स्वगोत्रजैः ।
आशायां श्राद्धशालायां† द्विजोच्छिष्टं न मार्जयेत्"—इति ॥

उच्छिष्टमार्जनानन्तरं वैश्वदेवं कृत्वा शेषमन्नं ब्राह्मणैः सह भुञ्जीत । तथा च मत्स्यपुराणम्,—

---

* उच्छिष्टानि तत्क्षणात्,—इति मा० पुस्तके ।

† आसायं श्राद्धकालोऽयं,—इति मु० पुस्तके ।

"ततश्च वैश्वदेवान्ते सभृत्यसुतबान्धवः ।
भुञ्जीतातिथिसंयुक्तः सर्वं पितृनिषेवितम्"—इति ॥

यदा श्राद्धं निर्वर्त्य वैश्वदेवादिकं क्रियते, तदा तच्छेषादेव तत्कार्यम् । तदाह पैठीनसिः,—

"श्राद्धं निर्वर्त्य विधिवद्वैश्वदेवादिकं ततः ।
कुर्याद्भिक्षां ततो दद्याद्धन्तकारादिकं तथा"—इति ।

आदिशब्देन नित्यश्राद्धं परिगृह्यते । तत इति पितृपाकशेषादित्यर्थः । नित्यश्राद्धं पृथक्पाकेन कार्यम् । अतएव तदधिकृत्य मार्कण्डेयः । "पृथक्पाकेन चेत्यन्ये"—इति । अथ नित्यश्राद्धमप्यनियतम् । तदाह स एव,—

"नित्यक्रियां पितॄणाञ्च केचिदिच्छन्ति मानवाः ।
न पितॄणां तथैवान्ये शेषं पूर्ववदाचरेत्"—इति ॥

यत्तु लौगाक्षिणोक्तम्,—

"पित्रर्थं निर्वपेत्पाकं वैश्वदेवार्थमेव च ।
वैश्वदेवं न पित्रर्थं न दार्शं वैश्वदेविकम्"—इति ॥

तदाहिताग्निकर्तृकश्राद्धविषयं, आहिताग्नेः श्राद्धान्तमेव वैश्वदेवस्य तेनैव विहितत्वात् ।

"पक्वान्नं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः ।
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः"—इति ॥

पक्वान्नं कर्मान्वाधानमन्वाहार्यकं दर्शश्राद्धम्[1] । यत्तु पुराणवचनम्,—

---

(१) "पूर्वेद्युरपि गृह्णाति उत्तरमन्वयंजति"—इति श्रुत्या, दर्शपौर्ण-

96

"प्रातिवासरिको होमः[1] श्राद्धादौ क्रियते यदि ।
देवा हव्यं न गृह्णन्ति कव्यञ्च पितरस्तथा"—इति ॥

तत् पितृपाकाद्वैश्वदेवकरणे वेदितव्यम् । अतएव पैठीनसिः,—

"पितृपाकात् समुद्धृत्य वैश्वदेवं करोति यः ।
आसुरन्तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते"—इति ॥

यदाऽग्नौकरणानन्तरं विकिरणानन्तरं वा वैश्वदेविकं कर्म क्रियते, तदाऽपि पृथक्पाकादेव तत्कार्यं, तच्छेषाद्वैश्वदेवकरणे दोषस्यापि समानत्वात्[2] । अग्नौकरणानन्तरं वैश्वदेवकरणं च स्मृत्यन्तरेऽभिहितम्,—

"वैश्वदेवाहुतीरग्नावर्वाग्* ब्राह्मणभोजनात् ।

---

* वैश्वदेवाहुतीः सर्वा अर्वाग्,—इति मु० ।

---

मासानुमासिकाख्यामावास्यायां विधानात् पश्चात्तं कर्माभावाधा-नमिति भावः । एवं पिण्डपितृयज्ञादनु पश्चात्क्रियते इति व्युत्पत्त्या अन्वाहार्य्यपदेन दर्शश्राद्धमुच्यते । तथाचोक्तम् । "पितृयज्ञन्तु निर्वर्त्त्य विप्रश्चन्द्रक्षयेऽग्निमान् । पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानु-मासिकम्"—इति । "अमावास्यां द्वितीयं यदन्वाहार्य्यं तदुच्यते" —इति च ।

(१) प्रातिवासरिको होमो वैश्वदेवहोमः ।

(२) तच्छेषात् अग्नौकरणशेषाद्विकिरणशेषाच्च । तच्छेषाद्वैश्वदेवकरणेऽपि पितृपाकात् समुद्धृत्यैव तत्करणं भवति, तदानीमपि अग्नौकरणसंस्का-रकृतत्वात् । एवञ्च पितृपाकात् समुद्धृत्य इति, प्रातिवासरिको होम इति वचनद्वयोक्तदोषोऽत्रापि समान एव भवतीति भावः ।

शुक्लपक्षेऽथवाऽऽदि श्राद्धं कृत्वा ततः स्नानम्"—इति ॥

यदि पितृपाकशेषादेवैश्वदेवं यदि वा पाकान्तरादुभयथाऽपि पितृपाकशेषादेव भोजनम्। तदाह याज्ञवल्क्यः,—

"प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम्"—इति।

असति तु पितृशेषे पाकान्तरं कृत्वाऽपि भोक्तव्यमेव। अभोजनस्य निषिद्धत्वात्। तथाच देवलः,—

"श्राद्धं कृत्वा तु यो विप्रो न भुङ्क्तेऽथ* कदाचन।

देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथा"—इति ॥

यतः पितृशेषभोजनं नित्यं, अतएवैकादश्यादौ नित्योपवासपक्षे भोजनप्रत्याम्नायः स्मर्यते,—

"उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत्।

उपवासं तदा कुर्यादाघ्राय पितृसेवितम्"—इति ॥

पितृसेवितभोजननियमोऽनुज्ञापक्षएव। अतएव शातातपः,—

"शेषमन्नमनुज्ञातं भुञ्जीत तदनन्तरम्।

इष्टैः सार्द्धन्तु विधिवद्बुद्धिमान् सुसमाहितः"—इति ॥

भोजनानन्तरं दातृभोक्त्रोर्नियममाह बृहस्पतिः,—

"तांत्रिशां ब्रह्मचारी स्यात् श्राद्धकृच्छ्राद्धिकैः सह।

अन्यथा वर्त्तमानौ तौ स्यातां निरयगामिनौ"—इति।

मत्स्यपुराणेऽपि,—

"पुनर्भोजनमध्वानं यानमायासमैथुनम्।

---

* भुङ्क्ते तु,—इति मु०।

श्राद्धकृच्छ्राद्धभुक्चैव सर्वमेतद्विवर्जयेत्* ॥
स्वाध्यायं कलहञ्चैव दिवास्वप्नञ्च सर्वदा"—इति।

श्राद्धभोजिनो विशेषमाह यमः,—

"पुनर्भोजनमध्वानं भारमायासमैथुनम्†।
सन्ध्यां प्रतिग्रहं होमं श्राद्धभुक्त्वष्ट वर्जयेत्"—इति॥

सन्ध्याहोमयोः प्रतिषेधस्तत्प्रायश्चित्तस्य। कृते तु प्रायश्चित्ते कुर्यादेव। अतएव भविष्यत्पुराणम्,—

"दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग्द्विजः।
ततः सन्ध्यामुपासीत जपेच्च जुहुयादपि"—इति॥

एवमुक्तरीत्या पार्वणं कर्त्तुमसमर्थः संकल्पविधिना श्राद्धं कुर्यात्। तदुक्तं स्मृत्यन्तरे,—

"अङ्गानि पितृयज्ञस्य यदा कर्तुं न शक्नुयात्।
संकल्पश्राद्धमेवासौ कुर्यादर्घादिवर्जितम्"—॥

व्यासोऽपि,—

"त्यक्ताग्नेः पार्वणञ्चैव नैकोद्दिष्टं सपिण्डनम्।
अत्यक्ताग्नेस्तु पिण्डोक्तिकालात् संकल्प्य भोजयेत्‡"—इति॥

अयमर्थः। आलस्येन योऽग्निं त्यजति स त्यक्ताग्निः, न तस्य श्राद्धेऽधिकारः, किं तु तस्याग्निव्यतिरिक्तस्य साग्निकस्य। विधुरादेश(१)

* सर्वमेव विवर्जयेत्,—इति मा०।
† भाराध्वनमैथुनम्,—इति मु०।
‡ बोधयेत्,—इत्यादर्शपुस्तकेषु पाठः। परन्तु भोजयेदिति पाठस्यान्यत्र दर्शनात् सङ्गततया च अस्य मूले निवेशितः।

(१) विधुरो मृतभार्य्यः।

पिण्डोपजीविनश्राद्धेऽधिकार उक्तः । यस्मादनग्निकानामप्यधिकारित्वात् श्राद्धमवश्यं कर्त्तव्यं, तस्माद्विवाहे[*] पार्वणविधानशक्तः संकल्पविधानेन कुर्यादिति । संकल्पविधानस्वरूपं स एवाह,—

"संकल्पं तु यदा कुर्यात्, न कुर्यात् पात्रपूरणम् ।
नावाहनाग्नौकरणं पिण्डांश्चैव न दापयेत्"—इति ॥

उच्छिष्टपिण्डोन दातव्यः,

"संकल्पं तु यदा श्राद्धं न कुर्यात् पात्रपूरणम् ।
विकिरश्च न दातव्यः—— ——"

इति स्मृत्यन्तरात् । एवं दर्शे कर्त्तव्यं पार्वणश्राद्धमुक्तं, अथ तद्विकृतिभूतं प्रत्याब्दिकं निरूप्यते । तत्र लौगाक्षिः,—

"श्राद्धं कुर्यादवश्यन्तु प्रमीतपितृकः स्वयम् ।
इन्दुक्षये मासि मासि वृद्धौ प्रत्यब्दमेव च"—इति ॥

तत्रेतिकर्त्तव्यतामाह जातूकर्ण्यः,—

"पितुः पितृगणस्थस्य कुर्यात् पार्वणवत् सुतः ।
प्रत्यब्दं प्रतिमासञ्च विधिर्ज्ञेयः सनातनः"—इति ।

पितृगणस्थः सपिण्डीकृतः । तस्य प्रतिसांवत्सरिकमनुमासिकञ्च श्राद्धं पार्वणविधिना कुर्यात् । यमदग्निरपि,—

"सपात्रां[†] वरपिण्डलमौरसो विधिवत् सुतः ।
कुर्वीत दर्शवच्छ्राद्धं मातापित्रोर्मृतेऽहनि"—इति ॥

---

[*] तस्माद्विवाहे,—इति पाठोऽत्र भवितुं युक्तः ।

[†] सपात्र,—इति पाठोऽत्र प्रतिभाति ।

ननु दर्शातिदेशान्मातामहानामपि श्राद्धं प्रसज्येत(१)। नायं दोषः। प्रत्याब्दिके षट्पिण्डानां पर्युदस्तत्वात्। तथाच कात्यायनः,—

"कर्षूसमन्वितं मुक्त्वा तथाऽऽद्यं श्राद्धषोडशम्(२)।
प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युः षडिति स्थितिः"—इति।

कर्षूसमन्वितं सपिण्डीकरणम्(३)। यत्तु यमेनोक्तम्,—

"सपिण्डीकरणादूर्द्ध्वं प्रतिसम्वत्सरं सुतैः।
मातापित्रोः पृथक्कार्य्यमेकोद्दिष्टं मृतेऽहनि"—इति॥

यच्च मृताहं प्रकृत्य व्यासेनोक्तम्,—

"एकोद्दिष्टं परित्यज्य पार्वणं कुरुते नरः।
अकृतं तद्विजानीयाद्भवेच्च पितृघातकः"—इति॥

तत्र पार्वणैकोद्दिष्टयोर्विकल्पः। तथापि सदाचारतो व्यवस्था। अमावास्यायां प्रेतपक्षे(४) च मृताहे पार्वणं नियतम्। तदाह मनुः,—

---

(१) दर्शे मातामहानामपि श्राद्धसत्त्वादिति भावः।

(२) कर्षूर्नाम पिण्डदानार्थमवटविशेषोऽस्मिन् श्राद्धे सद्भिर्विहितः। आद्यं पिण्डप्रदानादिभूतं, मरणोत्तरं कर्त्तव्येषु श्राद्धेषु मध्ये प्रथम-कर्त्तव्यं वा। श्राद्धषोडशं, "द्वादशप्रतिमास्यानि आद्यं षाण्मासिके तथा। सपिण्डीकरणञ्चैव इत्येतत् श्राद्धषोडशम्"—इति कात्यायनेनैव विवृतम्।

(३) कात्यायनीये सूत्रे सपिण्डीकरणे कर्षूविधानाश्रवणात् सपिण्डीकरणस्य षोडशश्राद्धान्तर्गतत्वाच्च कर्षूसमन्वितपदेनाद्यश्राद्ध-ग्रहणमेव युक्तमुत्पश्यामः।

(४) प्रेतपक्षोऽश्वयुक्कृष्णपक्षः।

"अमायां तु क्षयो यस्य प्रेतपक्षेऽथवा पुनः ।
पार्वणं तत्र कर्त्तव्यं नैकोद्दिष्टं कदाचन"—इति ॥

अतेषु न क्वापेकोद्दिष्टं, किं तु सर्वत्र पार्वणमेव । तथाच प्रचेताः,—

"हुताशनसमायेव नैव प्रेतो भवेद्यतिः ।
अतः सुतेन कर्त्तव्यं पार्वणं तस्य सर्वदा"—इति ॥

अत्र केचित्पार्वणैकोद्दिष्टयोरन्यथा व्यवस्थामाहुः,—

"प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ ।
कुर्यातामितरे कुर्युरेकोद्दिष्टं सुताद्दश"—इति

शाट्यकर्णवचनात्[१] । तदयुक्तम्,

"एकोद्दिष्टं तु कर्त्तव्यमौरसेन मृतेऽहनि ।
सपिण्डीकरणादूर्ध्वं मातापित्रोस्तु पार्वणम्"—इति

पैठीनसिवचनविरोधात्[२] । शाट्यकर्णवचनं तु यथाव्यतिरिक्त-प्रत्यब्दकर्त्तव्यावश्यतोयादिविषयत्वेनाप्युपपद्यते । यत्तु सुमन्तुनोक्तम्,—

"कुर्वीत विधिवच्छ्राद्धं पार्वणं योऽग्निमान् द्विजः ।
पित्रोरनग्निमान्धीर एकोद्दिष्टं मृतेऽहनि"—इति ॥

तदयुक्तम्,

---

(१) तथा चौरसक्षेत्रजयोः पार्वणमन्येषामेकोद्दिष्टमिति केषांचिन्मते व्यवस्था पर्यवस्यति ।

(२) पैठीनसिवचने औरसस्याप्येकोद्दिष्टविधानादविरोधः ।

"बह्वग्नयस्तु ये विप्रा ये चैकाग्नय एव च[1] ।
तेषां सपिण्डनादूर्ध्वमेकोद्दिष्टं न पार्वणम्"—इति

स्मृत्यन्तरे साग्निकस्याप्येकोद्दिष्टविधानात्[2] ।

एकोद्दिष्टलक्षणमाह याज्ञवल्क्यः,—

"एकोद्दिष्टं दैवहीनमेकार्घैकपवित्रकम् ।
आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ।
उपतिष्ठतामित्यक्षय्यस्थाने विप्रविसर्जनम् ।
अभिरम्यतामिति वदेद्ब्रूयुस्तेऽभिरताः स्म ह"—इति ।

कात्यायनोऽपि । "अथैकोद्दिष्टमेकं पात्रमेकोऽर्घ एकं पिण्डं* नावाहनं नाग्नौकरणं नात्र विश्वेदेवाः स्वदितमिति तृप्तिप्रश्नः सुस्वदितमित्यनुज्ञानमुपतिष्ठतामित्यक्षय्यस्थाने अभिरम्यतामिति विसर्गे अभिरताः स्मेत्यपरे"—इति । तच्चैकोद्दिष्टं त्रिविधं, नवं नवमिश्रं पुराणं चेति । तत्र प्रथमाद्यायेकादशाहान्तविहितं नवश्राद्धम् । तथा चाङ्गिराः,—

"प्रथमेऽह्नि तृतीये च पञ्चमे सप्तमेऽपि वा ।
नवमैकादशे चैव तन्नवश्राद्धमुच्यते"—इति ॥

वशिष्ठोऽपि,—

---

* एकः पिण्ड इति सा० ।

---

(१) बह्वग्नयः श्रौताग्निमन्तः । एकाग्नयः स्मार्त्ताग्निमन्तः ।

(२) तथाच पार्वणैकोद्दिष्टयोर्विकल्पव्यवस्थैव वाच्योक्तेति भावः ।

नवमासिकयोः प्रायश्चित्तमभिधायोत्तरकालीनं श्राद्धं पुराणशब्देन व्यवहृत्य प्रायश्चित्तं विहितम्,—

"चान्द्रायणं नवश्राद्धे प्राजापत्यं तु मासिके।
एकाहस्तु पुराणेषु प्रायश्चित्तं विधीयते"—इति॥

इत्थं पार्वणैकोद्दिष्टे अभिहिते, अथोभयात्मकं सपिण्डीकरणमुच्यते। तत्र लौगाक्षिः,—

"श्राद्धानि षोडशापाद्य विदधीत सपिण्डनम्"—इति।

षोडश श्राद्धानि श्राद्धकल्पे दर्शितानि,—

"द्वादश प्रतिमास्यानि आद्यषाण्मासिके तथा।
त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश"—इति॥

अत्राद्यषाण्मासिकाब्दिकशब्दाः ऊनमासिकोनषाण्मासिकोनाब्दिकपराः। द्वादशमासिकानां कालो याज्ञवल्क्येन दर्शितः,—

"मृतेऽहनि तु कर्त्तव्यं प्रतिमासं तु वत्सरम्।
प्रतिसंवत्सरञ्चैवमाद्यमेकादशेऽहनि"—इति॥

वत्सरं वत्सरपर्य्यन्तं मासि मासि मृतेऽहनि श्राद्धं कर्त्तव्यं, सपिण्डीकरणादूर्द्ध्वं प्रतिसंवत्सरं मृतेऽहनि कर्त्तव्यं, आद्यं तु मासिकमेकादशेऽहनि कर्त्तव्यम्(१)। ऊनषाण्मासिकादीनां कालमाह गालवः,—

"ऊनषाण्मासिकं षष्ठे मासार्द्धे चोनमासिकम्।
त्रैपक्षिकं त्रिपक्षे स्यादूनाब्दं द्वादशे तथा*"—इति॥

---

* द्वादशेऽहनि,—इति मु०।

---

(१) आद्यं मासिकमूनमासिकमित्यर्थः। तथाच आद्यमेकादशेऽहनीत्यत्र आद्यं द्वादशमासिकानामादिभूतं तेषां पूर्वं कर्त्तव्यमित्यर्थो बोध्यः।

वृद्धगौतमोऽपि,—

"एकद्वित्रिचतुर्दिनैरूने त्रिभागन्यून एव* वा ।

श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौतमः"—इति ॥

ऊनमासिकस्य कालविकल्पमाह गोभिलः,—

"मरणाद्द्वादशाहे वा आद्यादूने चोनमासिकम्"—इति ।

नन्दायां वर्ज्यं कालमाह गार्ग्यः,—

"नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे ।

ऊनश्राद्धं न कुर्वीत गृही पुत्रधनक्षयात्"—इति ॥

मरीचिरपि,—

"त्रिपुष्करे च नन्दासु सिनीवाल्यां(१) भृगोर्दिने ।

चतुर्दश्यां च नोनानि कृत्तिकासु त्रिपुष्करे"—इति ॥

तिथिवारनक्षत्रविशेषाणां त्रयाणां मेलनं त्रिपुष्करम् । द्वयोर्मेलनं द्विपुष्करम् । के ते विशेषाः? द्वितीयासप्तमीद्वादश्यो भद्रातिथयः, भानुभौमशनैश्चरवाराः, पुनर्वसूत्तरफल्गुनीविशाखोत्तराषाढापूर्वभाद्रपदानक्षत्राणि(२) ।

---

* त्रिभागन्यून एव,—इति मु० ।

---

(१) नन्दासु प्रतिपत्षष्ठ्येकादशीषु । "सा दृष्टेन्दुः सिनीवाली"—इति कोषात् चतुर्दशीयुक्तामावस्या सिनीवालीशब्देनोच्यते ।

(२) तदुक्तं ज्योतिषे,—

"विषमचरणविष्णुं भद्रा तिथिर्यदि जायते ।

दिनकरशनिवाराश्चेत्तत्र वासरे ।

गुणिभिरुदितः सोऽयं योगस्त्रिपुष्करसंज्ञितः"—इति ।

कार्य्यम्। पिण्डपितृयज्ञवत्संस्था तु श्रूयते। "अमावास्यामपराह्ण पिण्डपितृयज्ञेन चरन्ति"—इति। सपिण्डीकरणात् पूर्वं पिण्डपितृयज्ञस्याभावो गालवेन दर्शितः,—

"सपिण्डीकरणात्प्रेते पैतृकं पदमास्थिते।
आहिताग्नेः सिनीवाल्यां पितृयज्ञः प्रवर्त्तते"—इति।

दर्शागमने तु साग्निर्द्वादशेऽह्नि सपिण्डनं कुर्यात्। तदुक्तं भविष्यपुराणे,—

"यजमानोऽग्निमान् राजन्, प्रेतश्चानग्निमान् भवेत्।
द्वादशाहे भवेत्कार्य्यं सपिण्डीकरणं सुतैः"—इति।

गोभिलोऽपि,—

"साग्निकस्तु यदा कर्त्ता प्रेतश्चानग्निमान् भवेत्।
द्वादशाहे तदा कार्य्यं सपिण्डीकरणं सुतैः"—इति।

प्रेतस्य साग्नित्वे तृतीयपक्षे सपिण्डीकरणं कार्य्यम्। तदाह सुमन्तुः,—

"प्रेतश्चेदाहिताग्निः स्यात् कर्त्ताऽनग्निर्यदा भवेत्।
सपिण्डीकरणं तत्र कुर्यात्पक्षे तृतीयके"—इति।

उभयोः साग्निकत्वे द्वादशाहे सपिण्डीकरणं कार्य्यम्।

"साग्निकस्तु यदा कर्त्ता प्रेतो वाऽप्यग्निमान् भवेत्।
द्वादशाहे तदा कार्य्यं सपिण्डीकरणं पितुः"—इति।

उभयोरनग्नित्वे द्वादशाहादयः पञ्च काला इच्छया विकल्प्यन्ते। तदुक्तं भविष्यपुराणे,—

"सपिण्डीकरणं कुर्यात् यजमानस्त्वनग्निमान्।

"अर्वागब्दाद्यत्र यत्र सपिण्डीकरणं कृतम् ।
तदूर्द्धं मासिकानां स्याद्यथाकालमनुष्ठितिः"—इति ।

सपिण्डीकरणादूर्द्धमावर्त्तनीयानामनुमासिकादीनां वृद्धिप्राप्तौ पुनरपकर्षः । तदाह गार्ग्यायणिः,—

"सपिण्डीकरणादर्वागपकृष्य कृतान्यपि ।
पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात्"—इति ।

निषेधश्च कात्यायनेनोक्तः,—

"निर्वर्त्त्य वृद्धितन्त्रन्तु मासिकानि न तन्त्रयेत्"—इति ।

सपिण्डीकरणस्य गौणकालमाह व्याघ्रपात्,—

"सपिण्डीकरणश्राद्धं मुख्यकाले न चेत् कृतम्* ।
रौद्रे हस्ते च रोहिण्यां मैत्रभे वा समाचरेत्"—इति ।

सपिण्डीकरणेतिकर्त्तव्यतामाह याज्ञवल्क्यः,—

"गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ।
अर्घ्यार्थं, पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥
ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत्"—इति ।

कात्यायनोऽपि । "ततः संवत्सरे पूर्णे चत्वारि पात्राणि सतिलगन्धोदकैः पूरयित्वा त्रीणि पितृणामेकं प्रेतस्य प्रेतपात्रं पितृपात्रेष्वासिञ्चति ये समाना इति द्वाभ्यामेतेन पिण्डो व्याख्यातः"—इति । यदा पिता म्रियते पितामहस्तिष्ठति, तदा प्रपितामहादिभिः सह पितुः सापिण्ड्यम् । तदुक्तं ब्रह्माण्डपुराणे,—

* कृतम्,—इति पा० ।

"मातुः सपिण्डीकरणं कथं कार्यं भवेत्सुतैः ।
पितामह्यादिभिः सार्द्धं सपिण्डीकरणं स्मृतम्"—इति

प्रमीतपितृकस्य विकल्पमाह यमः,—

"जीवत्पिता पितामह्या मातुः कुर्य्यात् सपिण्डताम् ।
प्रमीतपितृकः पित्रा पितामह्याऽथवा सुतः"—इति ।

पुत्रिकासुतो मातृसपिण्डनं मातामहादिभिः सह कुर्य्यात् । तथाच बौधायनः,—

"आदिशेत् प्रथमे पिण्डे मातरं पुत्रिकासुतः ।
द्वितीये पितरन्तस्यास्तृतीये च पितामहम्"—इति ।

चितारोहणे तु भर्त्रैव सापिण्ड्यं नियतम्(१)। तदाह शातातपः,—

"मृता याऽनुगता नाथं सा तेन सहपिण्डताम्* ।
अर्हति सर्वकालेऽपि यावदाभूतसंप्लवम्(२)"—इति ।

---

* सहपिण्डनम्,—इति मु० ।

---

(१) तथाच पुत्रिकायाऽपि चितारोहणे कृते तस्या अपि सपिण्डीकरणं भर्त्रैव कर्त्तव्यं, न तु तत्पित्रादिभिरित्यर्थः । एवमनुमरणपक्षे, 'प्रमीतपितृकः पित्रा पितामह्याऽथवा सुतः'—इत्युक्तविकल्पोऽपि न भवति इति मन्तव्यम् ।

(२) अनुमृताया भूतसंप्लवपर्य्यन्तं प्रलयकालपर्य्यन्तं सर्वकाले अपि, सा भर्त्रा सह सपिण्डनमर्हतीत्यर्थः । अथाऽनुमरणेनैव तस्याः सर्वकाल-स्वं भवति न तु केवलमुत्पत्तये, तथापि भर्त्रा सह तस्याः सपिण्डनं कर्त्तव्यमिति तात्पर्य्यम् ।

आसुरादिविवाहेषु वर्णानां* बोधिता भवेत्"—इति।

चतुर्थे पञ्चमाह सुमन्तुः,—

"पिता पितामहे योज्यः पूर्णे संवत्सरे सुतैः।
माता मातामहे तद्वदित्याह भगवान् शिवः"—इति।

मातुः सापिण्ड्ये गोत्रनियममाह† मार्कण्डेयः,—

"ब्राह्मादिषु विवाहेषु या ऊढा कन्यका भवेत्।
भर्तृगोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया॥
आसुरादिविवाहेषु पितृगोत्रेण धर्मवित्"—इति।

गोभिलिरपि,—

"मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाः।
कुर्वीत पुत्रिकापुत्र एवमाह प्रजापतिः(१)"—इति।

पत्न्याः सापिण्ड्यं दर्शयति पैठीनसिः,—

"अपुत्रायां मृतायान्तु पतिः कुर्यात् सपिण्डताम्।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत्(२)"—इति।

पत्युः सापिण्ड्यमाह गोभिलिः,—

---

* विप्राणां,—इति पुस्तकान्तरीयः पाठः समीचीनः। विप्राणामिति विवाहितानामित्यर्थः।

† गोत्रनिर्णयमाह,—इति पा० स०।

---

(१) पुत्रिकाया ब्राह्मादिविवाहेनोढाया अपि पितामहादित्वं पितृगोत्रेण पिण्डोदकादित्यर्थः।

(२) यदा पतिः सपिण्डनं करोति, तदा श्वश्र्वादिभिः सहैव स्त्रियाः सपिण्डनं कुर्य्यादित्यर्थः।

"सर्वाभावे स्वयं पत्न्यः स्वभर्तॄणाममन्त्रकम् ।
सपिण्डीकरणं कुर्युः ततः पार्वणमेव च"—इति ।

सुमन्तुरपि,—

"अपुत्रे प्रस्थिते(१) कर्त्ता नास्ति चेच्छ्राद्धकर्म्मणि ।
तत्र पत्न्यपि कुर्वीत सापिण्ड्यं पार्व्वणं तथा"—इति ।

यत्तु स्मृत्यन्तरम्,—

"अपुत्रस्य परेतस्य नैव कुर्यात्सपिण्डताम् ।
अशौचमुदकं पिण्डमेकोद्दिष्टं न पार्वणम् ॥
अपुत्रा ये मृताः केचित्पुरुषा वा तथा स्त्रियः* ।
तेषां सपिण्डनाभावादेकोद्दिष्टं न पार्वणम्(२)"—इति ।

तत्पुत्रोत्पादनविधिप्रशंसापरतया व्याख्येयम्(३) । यतीनां सा-पिण्ड्यं निषेधत्युशना,—

---

* स्त्रियोऽपि वा,—इति मु० ।

---

(१) प्रस्थिते मृते । संस्थिते,—इति तु युक्तः पाठः ।

(२) सपिण्डनाभावात् पार्व्वणं नेति, "सपिण्डीकरणादूर्द्ध्वं प्रेतः पार्व्वण-भाग्भवेत्"—इत्यनेन कृतसपिण्डनस्यैव पार्व्वणभागित्वोक्तेरिति भावः ।

(३) अपुत्रस्यापि सपिण्डनं पार्व्वणञ्चास्त्येव, पूर्व्वोक्तवचनात् । अत तद-भावोक्तिस्तु पुत्रोत्पादनविधिप्रशंसायां । इत्थमभिसन्धिः पुत्रोत्प-त्त्यभावे सपिण्डनं पार्व्वणञ्च न भवति, अतस्तदुत्पादने सर्व्वथा यतितव्यमिति, तद्विधिः प्रशस्यते । तथाच अपुत्रस्य सपिण्डनं पार्व्वणञ्च नाप्नोतीति वस्तुतोऽप्यभाववचनं अनुदरा कन्येत्यादिवदिति भावः ।

"सपिण्डीकरणं तेषां न कर्त्तव्यं सुतादिभिः।
पितृत्वपदयादेव प्रेतत्वं नैव जायते(१)॥
एकोद्दिष्टं न कुर्वीत यतीनाञ्चैव सर्वदा।
अहन्येकादशे तेषां पार्व्वणन्तु विधीयते"—इति।
इत्युभयात्मकं सपिण्डीकरणं निरूपितम्।

---

## अथ पार्व्वणविकृतिरूपं वृद्धिश्राद्धं निरूप्यते।

तत्र याज्ञवल्क्यः—
"एवं प्रदक्षिणावृत्को वृद्धौ(२) नान्दीमुखान् पितॄन्।
यजेत दधिकर्कन्धुमिश्राः पिण्डाः* यवैः क्रिया"—इति।
एवं, पार्व्वणवदित्यर्थः। तथाच विष्णुधर्मोत्तरे,—
"वृद्धौ समर्च्चयेद्विद्वान् नित्यं नान्दीमुखान् पितॄन्।
सम्पादितो विशेषस्तु शेषं पार्व्वणवद्भवेत्"—इति।
पार्व्वणवदित्यनेनावाहनपिण्डदानादिकोऽतिदिश्यते। अयं तु विशेषः सम्पादितः, नान्दीमुखसंज्ञकाः पितरः,—इति। एतच्च प्रदक्षिणावृद्दधिकर्कन्ध्वादीनां याज्ञवल्क्योक्तानामितरेषां च विशेषाणा-

---

* प्राप्ते,—इति मु०।

† मिश्रान् पिण्डान्,—इति मा० मु०।

---

(१) "यावत्कोऽप्य मनोरथा यावदज्ञानमेव च। यावन्न नियता बुद्धि-स्तावज्जीवेति च उच्यते"—इत्यत्र एतदर्थं बोध्यम्।

(२) वृद्धिशब्दाभिधानं कर्म्म विवाहादिकम्।

सुपचरणम्। ते च विशेषाः कात्यायनेन दर्शिताः। "आभ्युदयिके श्राद्धे प्रदक्षिणमुपचारः, पित्र्यमन्त्रवर्जमृजवो दर्भाः, यवैस्तिलार्थः, सुसम्पन्नमिति तृप्तिप्रश्नः, सुसम्पन्नमित्यनुज्ञा, दधिबदराक्षतमिश्राः पिण्डाः, नान्दीमुखान् पितॄनावाहयिष्ये इति पृच्छति, नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने, नान्दीमुखान् पितॄनर्चयिष्ये इति पृच्छति, नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च प्रीयन्तामित्यनेन स्वधां कुर्यात्, युग्मानाशयेत्"—इति। प्रचेता अपि,—

"मातृश्राद्धन्तु पूर्वं स्यात् पितॄणां तदनन्तरम्।
ततो मातामहानाञ्च वृद्धौ श्राद्धत्रयं स्मृतम्॥
न जपेत् पैतृकं जप्यं(१) न मांसं तत्र दापयेत्।
प्राङ्मुखो, देवतीर्थेन क्षिप्रं देशविसर्जनम्"—इति।

प्राङ्मुखः, पिण्डदानादिकं कुर्य्यादित्यध्याहारः। अतएव प्रचेताः,—

"अपसव्यं न कुर्वीत न कुर्य्यादप्रदक्षिणम्*(२)।
यथा चोपचरेद् देवान् तथा वृद्धौ पितॄनपि।
प्रदद्यात्प्राङ्मुखः पिण्डान् वृद्धौ सव्येन(३) मानवः"—इति।

पिण्डदाने विशेषमाह वशिष्ठः,—

---

* न कुर्य्यात्तु प्रदक्षिणम्,—इति पा०।

---

(१) अनेन मार्ज्जनातिदेशप्राप्तपितृगाथादिजपोऽत्र निषिध्यते।

(२) अत्र प्राचीनवद् वामावर्त्तोपचारो न कर्त्तव्यः, किन्तु दक्षिणावर्त्तेनेत्यर्थः।

(३) सव्येन उपवीतिना। प्राचीनावीतित्वस्यापसव्यतयोक्तत्वात्।

कार्ष्णाजिनिरपि,—

"कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः ।
नामकर्मणि बालानां चूडाकर्मादिके तथा ॥
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ।
नान्दीमुखान् पितृगणान् पूजयेत् प्रयतो गृही"—इति ॥

वृद्धगार्ग्योऽपि,—

"अन्याधानाभिषेकादाविष्टापूर्त्ते क्रियावली[१] ।
वृद्धिश्राद्धं प्रकुर्वीत आश्रमग्रहणे तथा"—इति ॥

एवं श्राद्धानि निरूपितानि । अधुना तत्कर्त्ता निरूप्यते ।
तत्र बृहस्पतिः,—

"अतीतस्य पितुः पुत्रैः श्राद्धं देयं प्रयत्नतः ।
ज्ञातिबन्धुसुहृच्छिष्यैर्ऋत्विग्भृत्यपुरोहितैः[२]"—इति ॥

विष्णुपुराणेऽपि,—

"पुत्रः पौत्रः प्रपौत्रो वा तद्वद् वा भ्रातृसन्ततिः ।

---

(१) अभिषेकोराज्याभिषेकः । इष्टं "अग्निहोत्रं तपः सत्यं वेदानाञ्चानु-पालनम् । आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते"—इत्युक्तलक्षणम् । पूर्त्तं, "वापीकूपतडागादि देवतायतनानि च । अन्नप्रदानमारामाः पूर्त्तमित्यभिधीयते"—इत्युक्तलक्षणम् । क्रियावली धर्मानुष्ठाने ।

(२) "पुरोहितञ्च कुर्वीत वृणुयादेव चर्त्विजम् । तेऽस्य गृह्याणि कर्माणि कुर्युर्वैतानिकानि च"—इति स्मरणात् गृह्यकर्मकर्त्ता पुरोहितः, वैतानिककर्मकर्त्ता ऋत्विक् । वैतानिकं श्रौतम् । अत एव स्मर्य्यते । "अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान् । यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते"—इति ।

यपिण्डसन्ततिर्वाऽपि क्रियार्हा नृप, जायते"—इति ।

तत्र मुख्यानुकल्पौ(१) विविनक्ति मनुः,—

"पितुः पुत्रेण कर्त्तव्या पिण्डदानोदकक्रिया ।
पुत्राभावे तु पत्नी स्यात् पत्न्यभावे तु सोदरः"—इति ॥

स्मृतिसङ्ग्रहेऽपि,—

"पुत्रः कुर्यात् पितुः श्राद्धं पत्नी तु तदसन्निधौ ।
धनहार्येव दौहित्रस्ततो भ्राता च तत्सुतः ॥
भ्रातुः सहोदरो भ्राता कुर्याद्दारादि तत्सुतः ।
ततस्सहोदरो भ्राता तदभावे तु तत्सुतः"—इति ॥

पुत्रशब्देन मुख्या गौणाश्च पुत्रा गृह्यन्ते(२)। तेषां सर्वेषामभावे पौत्रः कुर्यात्। तस्याभावे तु पत्नी। अतएव वृहस्पतिना पौत्रस्य पुत्रिकापुत्रसाम्यमुक्तं,—

"पौत्रोऽथ पुत्रिकापुत्रः स्वर्गप्राप्तिकरावुभौ ।
रिक्थे च पिण्डदाने च समौ तौ परिकीर्त्तितौ"—इति।

न चैतावता तयोः समविकल्पः शङ्कनीयः,

---

(१) मुख्यकल्पः प्रथमकल्पः। अनुकल्पः प्रतिनिधिकल्पः जघन्यकल्पः,—इति यावत्।

(२) मुख्यौ पुत्रिकौरसौ इतरे क्षेत्रजादयो गौणाः। "आज्याभावे यथा तैलं सद्भिः प्रतिनिधीकृतम्। तथैकादश पुत्राः स्युः पुत्रिकौरसयोर्विना"—इति स्मरणात्। पुत्रिकौरसयोरप्यौरसस्य श्रैष्ठ्यम्। "संस्कृतायां सवर्णायां स्वयमुत्पादयेत्तु यम्। तमौरसं विजानीयात् पुत्रं प्रथमकल्पितम्"—इति स्मरणात्।

"नैव* पौत्रेण कर्त्तव्यं पुत्रवांश्चेत् पितामहः"—इति

कात्यायनस्मरणात् । पत्न्यभावे तु सोदर इत्ययं क्रमः, पत्न्या-द्यावरणे द्रष्टव्यः । अन्यथा यो दायहरः, सएव कुर्यात् । अत एव विष्णुापस्तम्बौ । "यश्चार्थहरः स पिण्डदायी"—इति । पुत्रः पितृवित्ताभावेऽपि पिण्डं दद्यात्तदभावे सपिण्डोदद्यात्, सपिण्डाभावे समानोदकादयः कुर्युः । तथा च मार्कण्डेयपुराणम्,—

"पुत्राभावे सपिण्डास्तु तदभावे सहोदकाः(१) ।
मातुः सपिण्डा ये वा स्युर्ये वा मातुः सहोदकाः ॥
कुर्युरेनं विधिं सम्यक् अपुत्रस्य सुताः† सुताः ।
कुर्य्यान्मातामहायैव पुत्रिकातनयस्तथा ॥
सर्वाभावे स्त्रियः कुर्युः स्वभर्तॄणाममन्त्रकम् ।
तदभावे च नृपतिः कारयेत्तस्य रिक्थतः ।
तज्जातीयैर्नरैः‡§ सम्यक् दाहाद्याः सकलाः क्रियाः ।
सर्वेषामेव वर्णानां बान्धवो नृपतिर्यतः"—इति ॥

---

* नैवम्,—इति मु० ।

† सुताः,—इति मा० ।

‡ नास्तीदमर्द्धं मा० स० पुस्तकयोः ।

§ तज्जातीयैर्नरैः,—इति मु० ।

---

(१) "सहोदकाः समानोदकाः । "सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते । समानोदकभावस्तु जन्मनाम्नोरवेदने"—इत्यनेन सपिण्डसमानोदक-योर्भेदउक्तः ।

सर्वाभावे स्त्रियः कुर्युरित्यासुरादिविवाहोढस्त्रीविषयम्। अत पुत्राभावे तु पत्नीत्यनेन न विरोधः। तस्याः पत्नीत्वाभावात् अतएव शातातपः तस्याः पत्नीत्वं निषेधति,—

"क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते।
न सा दैवे न सा पित्र्ये दासीं तां कवयो विदुः(१)"—इति।

पूर्वमध्यमोत्तरासु पुत्रादीनां व्यवस्थितमधिकारं दर्शयति पराशरो विष्णुपुराणे,—

"पूर्वाः क्रिया मध्यमाश्च तथैवोत्तरसंज्ञिताः।
त्रिप्रकाराः क्रिया ह्येतास्तासां भेदं शृणुष्व मे॥
आ दाहादा दशाहाच्च* मध्ये याः स्युः क्रिया मताः।

---

* आदाहाद्द्वादशाहाच्च,—इति मु०।

---

(१) "आसुरोऽर्थविक्रयात्"—इत्यादिना धनदानपूर्वककन्यापरिग्रहस्यासुरविवाहत्वात् धनेन क्रीतत्वाच्च क्रयक्रीतत्वात् न तस्याः पत्नीत्वम्। अतश्चासुरादिविवाहेनोढायाः पत्नीत्वाभावात् सर्वाभावे तस्याः अधिकारः, ब्राह्मादिविवाहोढायास्तु पत्नीत्वात् पुत्राभावे अधिकार इति सर्वाभावे स्त्रियः कुर्युरिति पुत्राभावे तु पत्नी स्यादित्यनयोर्वचनयोर्न विरोधः। यद्यपि आसुरविवाहमात्रे क्रयित्वाल्लोकेर्विवाहेनोढाया एव क्रयक्रीततया पत्नीत्वाभावो न गान्धर्वादिविवाहोढाया इत्यासुरादिविवाहोढस्त्रीविषयमित्यत्रादिपदमसङ्गतं प्रतिभाति, तथापि आसुरविवाहेनोढायाः सर्वाभावे अधिकारदर्शनात् तदपेक्षया परतो निर्दिष्टेन गान्धर्वादिविवाहेनोढायाः अपि तथात्वमिति भावः।

ताः पूर्वाः, मध्यमा मासि मास्येकोद्दिष्टसंज्ञिताः॥
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु।
क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः॥
पितृमातृसपिण्डैस्तु समानसलिलैस्तथा।
तत्सङ्घातगतैश्चैव राज्ञा वा धनहारिणा॥
पूर्वाः क्रियाश्च कर्त्तव्याः पुत्राद्यैरेव चोत्तराः।
दौहित्रैर्वा नरश्रेष्ठ*, कार्य्यास्तत्तनयैस्तथा"—इति॥

सपिण्डाद्यैरवनिपत्यन्तैः पूर्वाः क्रिया मध्यमाश्च कर्त्तव्याः। पुत्राद्यैरेव भ्रातृसन्तत्यन्तैः दौहित्राद्यैर्वोत्तराः क्रियाः कर्त्तव्याः, न सपिण्डाद्यैरवनिपत्यन्तैरित्यर्थः। औरसः सुतोऽनुपनीतोऽपि दाहादिकाः क्रियाः कुर्यात्। तदाह सुमन्तुः,—

"श्राद्धं कुर्यादवश्यन्तु प्रमीतपितृको हि यः।
व्रतस्थो वाऽव्रतस्थो वा एकएव भवेद्यदि"—इति॥

अव्रतस्थोऽनुपनीतः। तदाह वृद्धमनुः,—

"कुर्यादनुपनीतोऽपि श्राद्धमेको हि यः सुतः।
पितृयज्ञाहुतिं पाणौ जुहुयाद्ब्राह्मणस्य सः[१]"—इति॥

अत्र विशेषः प्रचेतसा† दर्शितः,—

---

* दौहित्रैर्भागिनेयैश्च,—इति मु०।

† वाक्येन,—इति मु०।

---

(१) अनुपनीतस्याग्निहोत्राधिकाराभावात्, "न चैवंविधो होमो लौकिकाग्नौ विधीयते"—इति मनुना पितृयज्ञियहोमस्य लौकिकाग्नौ निषेधाच्च अनुपनीतेन ब्राह्मणपाणावग्नौकरणहोमः कर्त्तव्य इति भावः।

"कृतचूडस्तु कुर्वीत उदकं पिण्डमेव च।
स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत्"—इति॥

मातापित्रोरुभयोरपि कुर्वीतेत्यर्थः। तथा च स्मृत्यन्तरम्,—

"कृतचूडोऽनुपेतस्तु पित्रोः श्राद्धं समाचरेत्।
उदाहरेत् स्वधाकारं न तु वेदाक्षराण्यसौ"—इति॥

यत्तु मनुनोक्तम्,—

"न ह्यस्मिन् युज्यते कर्म किञ्चिदामौञ्जिबन्धनात्।
नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते[1]"—इति॥

तत् त्रिवर्षकृतचूडाविषयम्। तथा च सुमन्तुः,—

"अनुपेतोऽपि कुर्वीत मन्त्रवत् पैतृमेधिकम्।
यद्यसौ कृतचूडः स्याद् यदि स्याच्च त्रिवत्सरः"—इति॥

अथ मातामहादिश्राद्धाधिकारनिर्णयः। तत्र व्यासः,—

"पितॄन्मातामहांश्चैव द्विजः श्राद्धेन तर्पयेत्।
अनृणः स्यात् पितृणान्तु ब्रह्मलोकं च गच्छति"—इति॥

मातामहानामिति बहुवचनं मातुः पितामहप्रपितामहयो-रपि[2] सङ्ग्रहार्थम्। तथा च पुलस्त्यः,—

"मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः।
तेषान्तु पितृवच्छ्राद्धं कुर्य्युर्दुहितृसूनवः"—इति॥

---

(१) मौञ्जिबन्धनमुपनयनम्। स्वधानिनयनं श्राद्धप्रयोगमन्त्रजातम्। स्वधा शब्दं निनीयते उच्चार्यते अनेनेति व्युत्पत्तेः।

(२) पितामहप्रपितामहयोरित्यत्र मातुरिति पूरणीयम्। तेन, मातुः प्रमातामह-वृद्धप्रमातामहयोरित्यर्थः।

पितृश्राद्धवन्मातामहश्राद्धमपि नित्यं, अकरणे प्रत्यवायश्रव-णात्। तदुक्तं स्कन्दपुराणे,—

"पार्वणं कुरुते यस्तु केवलं पितृहेतुतः।
मातामहं न कुरुते पितृहा स प्रजायते"—इति ॥

वृद्धवसिष्ठोऽपि,—

"पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्।
अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत्"—इति ॥

मातामहश्राद्धं क्वचिदपवदति कात्यायनः,—

"कर्षूसमन्वितं मुक्त्वा तथाऽऽद्यं श्राद्धषोडशम्।
प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युः षडिति स्थितिः"—इति ॥

कर्षूसमन्वितं सपिण्डीकरणश्राद्धम्। षोडशग्रहणमेकोद्दिष्टोप-लक्षणार्थम्। सहमरणे श्राद्धक्रममाह वृद्धवसिष्ठः,—

"भवेद्यदि सपिण्डानां युगपन्मरणं तथा।
सम्बन्धासत्तिमालोच्य तत्क्रमाच्छ्राद्धमाचरेत्"—इति ॥

अत्र पत्न्यादिसपिण्डेषु सम्बन्धासत्तिरेवं द्रष्टव्या। पतिपत्न्योः सम्बन्धः प्रत्यासन्नः, एकप्रतियोगिकत्वादव्यवधानाच्च[1]। पुत्रस्य तु मातापितृद्वयनिरूपणेन विलम्बितप्रतिपत्तेर्विप्रकृष्टः सम्बन्धः। भ्रातुस्तु पितृजन्मव्यवधानेन ततोऽपि विप्रकृष्टः। एवमन्यत्रोहनीयम्। पत्न्यादीनां पित्रोश्च सहमरणे वृद्धवसिष्ठः,—

---

(१) पतित्वं पत्नीभावनिरूप्यं, पत्नीत्वमपि पतिभावनिरूप्यमित्येकप्रति-योगिकत्वमन्तरव्यवहितत्वञ्च तत्सम्बन्धस्य।

"पत्न्याः पुत्रस्य तत्पुत्रभ्रातृतनयस्य च।
कुमारस्यैव पित्रोश्च जातमरणं यदि॥
वर्जयित्वा मातरपितृपूर्वं नापिण्ड्यमाचरेत्"—इति।

तत्पुत्रः पुत्रपुत्रः। तत्तनयो भ्रातृतनयः। यत्तु देवलेनोक्तम्,—

"पितरौ प्रमृतौ यस्य देहस्तस्याशुचिर्भवेत्।
न दैवत्रापि पित्र्यं च यावत् पूर्णो न वत्सरः"—इति॥

तत्पूर्वोक्तपत्न्यादिव्यतिरिक्तपित्र्यविषयम्। अतएव लौगाक्षिः,—

"अन्येषां प्रेतकार्याणि महागुरुनिपातने।
कुर्यात् संवत्सरादर्वाक् मातुलेकन्तु वर्जयेत्"—इति॥

प्रेतकार्याणि दहनादीन्यन्त्याङ्गानि विवक्षितानि,

"प्रायं मातृमरणेऽपि कुर्यादेकादशेऽहनि"—इति

विशेषस्मरणात्। एकाशितद्यदित्यर्थः*(१)। पित्रोः जातमरणे देवलः,—

"पित्रोरुपरमे पुत्राः क्रियां कुर्युर्द्वयोरपि।
अनुकल्पो च मान्येषां† जातमरणेऽपि वा"—इति॥

---

* एकाशितेष्वन्येषां वर्जयेदित्यर्थः,—इति पा०।

† नान्येषां,—इति पा०।

---

(१) अत्र पितृमातृमरणे बन्धुपरस्य पत्न्यादीनां दाहादि प्रेतकार्यं भवत्येव। पत्न्यादिभिन्नविषयाणान्तु दाहादावधिकार [illegible] वर्जनीय एव, न तेषां प्रेतश्राद्धमपि,—इति [illegible]।

अनुगमनेन पित्रोः सहातमरणे मातुरनुगमनेन दिनान्तर-मरणेऽपि तत्पुत्रादयस्ते क्रियां कुर्युः, अन्येषां पित्रोश्च सहात-मरणे यथाकालं न कुर्युः, किन्तु* त्रिपक्ष एव। तदाह लौगाक्षिः,—

"पत्नी पुत्रस्तथा पौत्रो भ्राता तत्पुत्रका अपि†।
पितरौ च यदैकस्मिन् म्रियेरन् वासरे तदा॥
आद्यमेकादशे कुर्यात् त्रिपक्षे तु सपिण्डनम्"—इति।

पित्रोरनुगमनं विना सहातमरणे मातुरनुगमनं विना दिनान्त-मरणेऽपि मातुस्त्रिपक्षे सपिण्डनं कुर्यात्। तथा च देवलः,—

"एकाहमरणे पित्रोरन्यस्यान्यदिने मृतौ।
सपिण्डनं त्रिपक्षे स्यादनुयानमृतिं विना"—इति॥

मातृपितृश्राद्धद्वयस्य दैवात्कालैक्येऽपि पितृश्राद्धं पूर्वं कुर्यात्। तदाह कार्ष्णाजिनिः,—

"पित्रोः श्राद्धे समं प्राप्ते नवे पर्युषितेऽपि वा।
पितृपूर्वं सुतः कुर्यादन्यत्राभिनियोगतः"—इति॥

अन्यत्र मातृपितृव्यतिरिक्तविषये सम्बन्धाभिनियोगतः कुर्या-दित्यर्थः। यत्तु प्रचेतसोक्तम्,—

"नैकः श्राद्धद्वयं कुर्यात् समानेऽहनि कुत्रचित्"—इति।

तदेकस्मिन् श्राद्धे क्रियमाणे दैवतैक्यात् यदन्यस्य प्रसङ्गात् सिद्धि-

---

* यथाकालं कुर्युः किन्तु,—इति मा०।

† पत्नी पुत्रः स्नुषा पौत्रो भ्रातृतनया अपि,—इति मु०।

सादिषयम्[१]। यथा नित्यश्राद्धामावास्याश्राद्धयोरमावास्याश्राद्धेन नित्यश्राद्धसिद्धिः प्रसज्येत। यथा वा, दार्शिकयुगादिश्राद्धयोर्युगादिश्राद्धेनैव दार्शिकसिद्धिः[२]। पित्रोर्मृतावैक्ये सहान्वारोहणविषये लौगाक्षिणा विशेष उक्तः,—

"कृतेऽहनि समासेन पिण्डनिर्व्वपणं पृथक्।
नवश्राद्धन्तु दम्पत्योरन्वारोहण एव तु"—इति॥

पिण्डनिर्व्वपणं श्राद्धं समासेन पाकैक्येन पृथगपत्नीकं[३] कुर्यात्। नवश्राद्धमपि तथा कुर्यात्। स्मृत्यन्तरमपि,—

"एकचित्यां समारूढौ दम्पती निधनं गतौ।
पृथक् श्राद्धं तथा कुर्य्यादोदनं च* पृथक् पृथक्"—इति॥

अनेकमातृभिरेकचित्यामन्वारोहणे कृते पाकैक्येन प्रथमं पितु- श्राद्धानन्तरं सापत्नमातृणां ज्येष्ठादिक्रमेण कुर्यात्। तदाह मनुः,—

---

* च,—इति मु०।

---

(१) अन्योद्देशेन प्रवृत्तादन्यस्यापि सिद्धिः प्रसङ्गः।

(२) तथा च अमावस्येतरत्र नित्यश्राद्धविधेः, युगादीतरत्र च दर्शश्राद्धविधेरनुष्ठानप्रयोजकत्वात् तत्तद्विधीनां प्रामाण्यमुपपद्यते। नित्यश्राद्धेनामावस्याश्राद्धसिद्धौ दर्शश्राद्धेन युगादिश्राद्धसिद्धौ चामावस्यादिश्राद्धविधीनां कृत्स्नानुष्ठानप्रयोजकत्वाभावात् अप्रामाण्यं स्यादिति भावः। एवञ्च विशेषेण सामान्यसिद्धिर्न तु सामान्येन विशेषसिद्धिरिति तात्पर्य्यम्।

(३) यद्वा पित्रोः श्राद्धं पृथगेव कुर्यात्, न तु पितुः श्राद्धं सपत्नीकं तथा कृते तावतैव मातृश्राद्धं कृतं भवेदित्यर्थः।

"एककाले गतासूनां बहूनामथ वा द्वयोः ।
तन्त्रेण श्रपणं कुर्यात् श्राद्धं कुर्यात् पृथक् पृथक् ॥
पूर्वकस्य मृतस्यादौ द्वितीयस्य ततस्ततः ।
तृतीयस्य ततः कुर्यात् सन्निपातेष्वयं क्रमः"—इति ॥

पूर्वकस्य मृतस्य पितुः, द्वितीयस्य ततो अनन्तरमृताया जनन्याः, तृतीयस्य ततोऽपि अनन्तरमृताया मातुरित्यर्थः(१) । पार्वणैकोद्दिष्टयोः सन्निपाते जाबालिः,—

"अथैकत्र भवेतां चेदेकोद्दिष्टं च पार्वणम् ।
पार्वणं तत्र निर्वर्त्य एकोद्दिष्टं समाचरेत्*"—इति ॥

अनेकनिमित्तसन्निपाते निमित्तानुक्रमेण श्राद्धं कुर्यात् । तथा च कात्यायनः,—

"द्वे बहूनि निमित्तानि जायेरन्नेकवासरे ।
नैमित्तिकानि कार्याणि निमित्तोत्पत्त्यनुक्रमात्"—इति ॥

यद्यप्येकदेवताकश्राद्धद्वयमेकस्मिन्नहनि न युक्तं, एकानुष्ठानेनेतरप्रयोजनस्यापि प्रसङ्गात् सिद्धेः; तथापि नैमित्तिकानि वचनबलादनेकान्यप्यनुष्ठेयानि । तथा च जाबालिः,—

"श्राद्धं कृत्वा तु तत्रैव पुनः श्राद्धञ्च तद्दिने ।
नैमित्तिकन्तु कर्त्तव्यं निमित्तानुक्रमोद्भवम्"—इति ॥

---

* एकोद्दिष्टन्तु निर्वर्त्य पार्वणं विनिवर्त्तयेत्,—इत्यपि पाठः ।

---

(१) मातृपदमत्र सपत्नीमातृपरं बोध्यम् ।

## शुद्धिपत्रम्।



| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम्। |
|---|---|---|---|
| २ | १२ | ज्ञता | ज्ञाती |
| ५ | २५ | स्मृतिष | स्मृतिषु |
| ६ | १० | व्युत्पत्तु | श्रुतिषु |
| १९ | १८ | अंस्ते | अंशेस्ते |
| " | १९ | निर्व्विघ्नम | निर्व्विघ्नम् |
| २१ | २४ | पूर्व्वपक्षा | पूर्व्वपक्षी |
| २४ | १६ | तथा | तथा च |
| २८ | ८ | मुर्ि | मुनि |
| ३० | २२ | मुद्रितात्मविवेक | मुद्रितात्मतत्त्वविवेक |
| ३३ | २ | आसभ्यते | आरभ्यते |
| ३७ | २४ | चिरूस्य | चिरूस्य |
| ३८ | ९ | पारभते | आरभते |
| ४० | २७ | परिभ्राम्यमाक्ष | परिभ्रमत्वा |
| ४५ | १६ | इत्युक्त-ध्र | इत्युक्त-स |
| ४६ | ९, १० | मी० अ० १ पा० २ सू० | मी० ६ अ० ८ पा० २२ सू० |
| ४७ | २० | प्रमात | प्रमीत |
| ५८ | ११ | धम्म | धर्म्मं |
| ५९ | २ | स्निग्धै: | स्निग्धै:, |
| ६१ | ८ | सव | सर्व्वं |
| ६९ | २१ | यस्य | तस्य |
| ७० | १२ | वत्सण | वत्सक ! |
| ७६ | २० | लक्षणमुच्यते | लक्षणे उच्यते |
| ८४ | २१ | गुणात्व | गुणत्व |
| ८६ | १२ | सर्वेकादशे | सर्व्वैकादशे |
| ९० | १० | भूलत्वेन | मूलत्वेन |
| ९२ | २१ | रूण | मूल |
| ९६ | १ | 'असकृत्य | "असकृद्य । ४ |
| " | ११ | . दृहस्य | देहस्य |

BIBLIOTHECA INDICA — A COLLECTION OF ORIENTAL WORKS

# PARĀŚARA-SMṚTI

## PARĀŚARA MĀDHAVA

VOLUME I

ĀCHĀRAKĀṆḌA

*With the Gloss By*

MĀDHAVĀCHĀRYYA

*Edited with Notes By*

MAHĀMAHOPĀDHYĀYA CHANDRAKĀNTA TARKĀLAṄKĀRA




THE ASIATIC SOCIETY

BIBLIOTHECA INDICA — A COLLECTION OF ORIENTAL WORKS

# पराशर-स्मृतिः

श्रीमन्माधवाचार्य्यकृतव्याख्या सहिता

आचारकाण्डम्

प्रथमभागात्मिका

महामहोपाध्याय श्रीचन्द्रकान्त तर्कालङ्कार परिशोधिता




दि एशियाटिक सोसाइटि

# PREFACE

We are happy to release the Volume One of Mm. Chandrakānta Tarkālaṅkāra's annotated edition of Parāśara Mādhava or Parāśara Smṛti with the gloss of Mādhavāchārya Vidyāraṇya. The Second Volume containing the *Prāyaśchitta Kāṇḍa* and the *Vyavahāra Kāṇḍa*, was published last year. The publication of the present volume has been unavoidably delayed as some portions of it could not be brought under photo offset process and had to be done through letter press. The Society published the original edition in its Bibliotheca Indica Series as early as 1890-93. Naturally it went out of print long ago, and even the Society's library copies have become too brittle to handle. We are thankful to the authorities of the Śaṁkara Vidyābhavana Chatuṣpāṭhī, Tārakeśwara and of the Sanskrit College, Calcutta, for kindly lending their copies which were found to be rather in a better state.

In tune with the well known concept of Manu, *Āchārah prabhavo Dharmah* Parāśara observes in the opening kāṇḍa of his treatise that he is truly a religious man who follows the prescriptions of *āchāra* ( *Chaturṇāmapi varṇānām āchāro Dharmapālakah* ). *Āchārakāṇḍa*, the first part of the Samhitā, discusses the basic duties of all the four varṇas, their domestic and socio-religious rites and ceremonies and also norms of their social relationship, but in a spirit of accomodation with the changing character of the age. Mādhavāchāryya, a scholar of deep erudition, possessing wide experience of men and matters, felt the need of explaining the inner significance of the social regulations in order to standardise life against the background of some fixed values.

Parāśara Smṛti with its liberal approach to social problems became Mādhava's medium. He analysed critically the prescriptions outlined in the text and in addition to the

commentary provided a digest of social and religious regulations, and there lies thi real value of his work. Mādhava's methodology came to be followed by later commentators in different parts of the country including Bengal and the treatise is still considered indispensable for students and scholars on Dharmaśāstra. The complete list of contents has been appended at the end of Volume II.

The' Society records its thanks to the Ministry of Education and Culture, Government of India, for providing the 50% of the cost of production by way of advance. Thanks are also due to Pandit Jadavendra Nath Tarkatīrtha for his valued assistance in the publication of the work.

The Asiatic Society,

S. K. Mitra
*General Secretary*